श्रीबालमनोरमा सीरीस् नं० २.

॥ श्रीः ॥

भगवत्पाणिनिमुनिप्रणीतः

# ॥ अष्टाध्यायीसूत्रपाठः ॥

## वार्तिक–गणपाठ–धातुपाठ–

## पाणिनीयशिक्षा-परिभाषापाठसहितः

(द्वितीयं संस्करणम् ।)

सि. शंकररामशास्त्रिणा संशोधितः

---

मद्रास् मैलापूर्
श्रीबालमनोरमामुद्रणालये
संमुद्रय प्रकाशितः

---

मूल्यं ] १९३७ [ रू. १.

॥ श्रीरस्तु ॥

॥ श्रीगुरुचरणारविन्दाभ्यां नमः ॥

# ॥ सवार्तिकगणाष्टाध्यायीसूत्रपाठः ॥

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥

येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥

वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम् ।
पाणिनिं सूत्रकारं च प्रणतोऽस्मि मुनित्रयम् ॥

अइउण् । ऋऌक् । एओङ् । ऐऔच् । हयवरट् । लण् । ञमङणनम् । झभञ् । घढधष् । जबगडदश् । खफछठथचटतव् । कपय् । शषसर् । हल् ॥

इति प्रत्याहारसूत्राणि ॥

# ॥ प्रथमोऽध्यायः ॥

## ॥ प्रथमः पादः ॥

१. वृद्धिरादैच् १६ ।
२. अदेङ्गुणः १७ ।
३. इको गुणवृद्धी ३४ ।
४. न धातुलोप आर्धधातुके २६५६ ।
५. क्ङिति च २२१७ ।
६. दीधीवेवीटाम् २१९० ।
७. हलोऽनन्तराः संयोगः ३० ।
८. मुखनासिकावचनोऽनुनासिकः ९ ।

९. तुल्यास्यप्रयत्नं सवर्णम् १० ।

* ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम् ।

१०. नाज्झलौ १३ ।

११. ईदूदेद्द्विवचनं प्रगृह्यम् १०० ।

१२. अदसो मात् १०१ ।

१३. शे १०२ ।

१४. निपात एकाजनाङ् १०३ ।

१५. ओत् १०४ ।

१६. संबुद्धौ शाकल्यस्येतावनार्षे १०५ ।

१७. उञः १०६ ।

१८. ऊँ १०७ ।

१९. ईदूतौ च सप्तम्यर्थे १०९ ।

२०. दाधा घ्वदाप् २३७३ ॥ १ ॥

२१. आद्यन्तवदेकस्मिन् ३४८ ।

२२. तरप्तमपौ घः २००३ ।

२३. बहुगणवतुडति संख्या २५८ ।

२४. ष्णान्ता षट् ३६९ ।

२५. डति च २५९ ।

२६. क्तक्तवतू निष्ठा ३०१२ ।

२७. सर्वादीनि सर्वनामानि २१३ ।

[ग.सू. १-३.] सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' 'स्वमज्ञातिधनाख्यायाम्' । 'अन्तरं बहिर्योगोपसंव्यानयोः' । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥ इति सर्वादिः ॥ १ ॥

२८. विभाषा दिक्समासे बहुव्रीहौ २९२ ।

२९. न बहुव्रीहौ २२२ ।

* अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ ।

३०. तृतीयासमासे २२३ ।

३१. द्वन्द्वे च २२४ ।

३२. विभाषा जसि २२५ ।  [२२६

३३. प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ।

३४. पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् २१८ ।

३५. स्वमज्ञातिधनाख्यायाम् २१९ ।

३६. अन्तरं बहिर्योगोपसंव्यानयोः २२० ।

* अपुरीति वक्तव्यम् ।

* विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम् ।

३७. स्वरादिनिपातमव्ययम् ४४७ ।

[ग.सू. ४-१५] स्वर् अन्तर् प्रातर् **अन्तोदात्ताः**॥ पुनर् सनुतर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् (अन्तिकात्) पृथक्—**आद्युदात्ताः** ॥ ह्यस् श्वस् दिवा रात्रौ सायम् चिरम् मनाक् ईषत् (शश्वत्) जोषम् तूष्णीम् बहिम् अधस् (अवस्) समया निकषा स्वयम् मृषा नक्तम् नञ् हेतौ (हे है) इद्धा अद्धा सामि—**अन्तोदात्ताः** ॥ 'वत्[४]' बत सनत् सनात् तिरस्-**आद्युदात्ताः** ॥ अन्तरा—**अन्तोदात्तः** ॥ (अन्तरेण) मक् ज्योक् योक् नक् कम् शम् सना सहसा श्रद्धा अलम् स्वधा वषट् विना माना स्वस्ति अन्यत् अस्ति उपांशु क्षमा विहायसा दोषा मुधा दिष्टया वृथा मिथ्या । 'क्त्वातोसुन्कसुनः[५], कृन्मकारसंध्यक्षरान्तः,[६]अव्ययीभावश्च'। पुरा मिथो मिथस् (प्रायस् मुहुस्) प्रबाहुकम् (प्रवाहिका) आर्यहलम् अभीक्षणम् साकम् सार्धम् सत्रम् समम् नमस् हिरुक् । 'तसि[८]लादयस्तद्धिता एधाच्पर्यन्ताः, शस्तसी[९], कृत्वसुच्[१०], सुच्[११], आस्थालौ[१२], च्व्यर्थाश्च[१३], (अथ) अम्[१४], आम्[१५]' प्रताम् (प्रतान्) प्रशान्—**आकृतिगणोऽयम्** ॥ तेनान्येऽपि । तथाहि माङ् श्रम् कामम् (प्रकामम्) भूयस् परम् साक्षात् साचि (साबि) सत्यम् मङ्क्षु संवत् अवश्यम् सपदि प्रादुस् आविस अनिशम् नित्यम् नित्यदा सदा अजस्रम् सन्ततम् उषा ओम् भूर् भुवर् झटिति तरसा सुष्ठु कु अञ्जसा अ

मिथु (अमिथु) विथक् भाजक् अन्वक् चिराय चिरम् चिररात्राय चिरस्य चिरेण चिरात् अस्तम् आनुषक् अनुषक् अनुषट् अम्नस् (अम्भस्) अम्मर् (अम्भर्) स्थाने वरम् दुष्टु बलात् शु अर्वाक् शुदि वदि इत्यादि । तासिलादयः प्राक्पाशपः । शस्प्रभृतयः प्राक्समासान्तेभ्यः । मान्तः कृत्वोऽर्थः । तसिवती । नानाञाविति—इति स्वरादिः ॥ २ ॥

३८. तद्धितश्चासर्वविभक्तिः ४४८ ।

३९. कृन्मेजन्तः ४४९ ।

४०. क्त्वातोसुन्कसुनः ४५० ॥ २ ॥

४१. अव्ययीभावश्च ४५१ ।

४२. शि सर्वनामस्थानम् ३१३ ।

४३. सुडनपुंसकस्य २२९ ।

४४. न वेति विभाषा २४ ।

४५. इग्यणः संप्रसारणम् ३२८ ।

४६. आद्यन्तौ टकितौ ३६ ।

४७. मिदचोऽन्त्यात्परः ३७ ।

* अन्त्यात्पूर्वो मस्जेरनुषङ्गसंयोगादिलोपार्थम् ।

४८. एच इग्घ्रस्वादेशे ३२३ ।

४९. षष्ठी स्थानेयोगा ३८ ।

५०. स्थानेऽन्तरतमः ३९ ।

५१. उरण्रपरः ७० ।

* लपर इति वक्तव्यम् ।

५२. अलोऽन्त्यस्य ४२ ।

५३. ङिच्च ४३ ।

५४. आदेः परस्य ४४ ।

५५. अनेकाल्शित्सर्वस्य ४५ ।

५६. स्थानिवदादेशोऽनल्विधौ ४९ ।

५७. अचः परस्मिन्पूर्वविधौ ५० ।

५८. न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ५१ ।

* स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत् ।

* क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम् ।

* पूर्वत्रासिद्धे न स्थानिवत् ।

* तस्य दोषः संयोगादिलोपलत्वणत्वेषु ।

५९. द्विर्वचनेऽचि २२४३ ।

६०. अदर्शनं लोपः ५३ । ॥ ३ ॥

६१. प्रत्ययस्य लुक्श्लुलुपः २६० ।

६२. प्रत्ययलोपे प्रत्ययलक्षणम् २६२ ।

* वर्णाश्रये नास्ति प्रत्ययलक्षणम् ।

६३. न लुमताऽङ्गस्य २६३ ।

* उत्तरपदत्वे चापदादिविधौ ।

६४. अचोऽन्त्यादि टि ७९ ।

६५. अलोऽन्त्यात्पूर्व उपधा २४९ ।

* नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ।

६६. तस्मिन्निति निर्दिष्टे पूर्वस्य ४० ।

६७. तस्मादित्युत्तरस्य ४१ ।

६८. स्वं रूपं शब्दस्याशब्दसंज्ञा २५ ।

* अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् ।

६९. अणुदित्सवर्णस्य चाप्रत्ययः १४ ।

७०. तपरस्तत्कालस्य १५ ।

७१. आदिरन्त्येन सहेता २ ।

७२. येन विधिस्तदन्तस्य २६ ।

* यस्मिन्विधिस्तदादावल्ग्रहणे ।

* समासप्रत्ययविधौ प्रतिषेधः ।

* उगिद्वर्णग्रहणवर्जम् ।

* सुसर्वार्धदिक्छब्देभ्यो जनपदस्य ।

* ऋतोर्वृद्धिमद्विधाववयवानाम् ।

* पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च ।

* तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ।

* अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ।

* प्रत्ययग्रहणे चापञ्चम्याः ।

७३. वृद्धिर्यस्याचामादिस्तद्वृद्धम् १३३५ ।

* वा नामधेयस्य ।

७४. त्यदादीनि च १३३६ ।

७५. एङ् प्राचां देशे १३३८ ।

* गौविकेष्विति वक्तव्यम् ।

वृद्धिराद्यन्तवदव्ययीभावः प्रत्ययस्य लुकपञ्चदश

इति पाणिनीयसूत्रपाठे प्रथमस्याध्यायस्य प्रथमः पादः ।

## द्वितीयः पादः ।

१. गाङ्कुटादिभ्योऽञ्णिन्ङित् २४६१ ।

* व्यचेः कुटादित्वमनसि ।

२. विज इट् २५३६ ।

३. विभाषोर्णोः २४४७ ।

४. सार्वधातुकमपित् २२३४ ।

५. असंयोगाल्लिट्कित् २२४२ ।

* ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन ।

६. इन्धिभवतिभ्यां च ३३९३ ।

* श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वा ।

७. मृडमृदगुधकुषक्लिशवदवसःक्त्वा ३३२३

८. रुदविदमुषग्रहिस्वपिप्रच्छः संश्च २६०९

९. इको झल् २६१२ ।

१०. हलन्ताच्च २६१३ ।

११. लिङ्सिचावात्मनेपदेषु २३०० ।

१२. उश्च २३६८ ।

१३. वा गमः २७०० ।

१४. हनः सिच् २६९७ ।
१५. यमो गन्धने २६९८ ।
१६. विभाषोपयमने २७३० ।
१७. स्थाघ्वोरिच्च २३८९ ।
१८. न क्त्वा सेट् ३३२२ ।
१९. निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ३०५२
२०. मृषस्तितिक्षायाम् ३०५५   ॥ १ ॥
२१. उदुपधाद्भावादिकर्मणोरन्यतरस्याम् [३०५६
२२. पूङः क्त्वा च ३०५१ ।
२३. नोपधात्थफान्ताद्वा ३३२४ ।
२४. वञ्चिलुञ्च्यृतश्च ३३२५ ।
२५. तृषिमृषिकृशेः काश्यपस्य ३३२६ ।
२६. रलो व्युपधाद्धलादेः संश्च २६१७ ।
२७. ऊकालोऽज्झ्रस्वदीर्घप्लुतः ४ ।
२८. अचश्च ३५ ।
२९. उच्चैरुदात्तः ५ ।
३०. नीचैरनुदात्तः ६ ।
३१. समाहारः स्वरितः ७ ।
३२. तस्यादित उदात्तमर्धह्रस्वम् ८ ।
३३. एकश्रुति दूरात्संबुद्धौ ३६६२ ।
३४. यज्ञकर्मण्यजपन्यूङ्खसामसु ३६६३ ।
३५. उच्चैस्तरां वा वषट्कारः ३६६४ ।
३६. विभाषा छन्दसि ३६६५ ।
३७. न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ३६६६
३८. देवब्रह्मणोरनुदात्तः ३६६७ ।
३९. स्वरितात्संहितायामनुदात्तानाम् ३६६८ ।
४०. उदात्तस्वरितपरस्य सन्नतरः ३६६९॥२॥
४१. अपृक्त एकाल्प्रत्ययः २५१ ।

४२. तत्पुरुषः समानाधिकरणः कर्मधारयः ७४५ ।

४३. प्रथमानिर्दिष्टं समास उपसर्जनम् ६५३

४४. एकविभक्ति चापूर्वनिपाते ६५५ ।

* एकविभक्तावषष्ठ्यन्तवचनम् ।

४५. अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १७८

* निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या ।

४६. कृत्तद्धितसमासाश्च १७९ ।

४७. ह्रस्वो नपुंसके प्रातिपदिकस्य ३१८ ।

४८. गोस्त्रियोरुपसर्जनस्य ६५६ ।

* ईयसो बहुव्रीहेर्नेति वाच्यम् ।

४९. लुक्तद्धितलुकि १४०८ ।

५०. इद्गोण्याः १७०३ ।

५१. लुपि युक्तवद्व्यक्तिवचने १२९४ ।

* समास उत्तरपदस्य बहुवचनस्य लुपः ।

५२. विशेषणानां चाजातेः १३०० ।

* हरीतक्यादिषु व्यक्तिः ।

* खलतिकादिषु वचनम् ।

* मनुष्यलुपि प्रतिषेधः ।

५३. तदशिष्यं संज्ञाप्रमाणत्वात् १२९५ ।

५४. लुब्योगाप्रख्यानात् १२९६ । [१२९७

५५. योगप्रमाणे च तदभावेऽदर्शनं स्यात्

५६. प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् १२९८ ।

५७. कालोपसर्जने च तुल्यम् १२९९ ।

५८. जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ८१७ ।

* संख्याप्रयोगे प्रतिषेधः ।

५९. अस्मदो द्वयोश्च ८१८ ।

* सविशेषणस्य प्रतिषेधः ।

६०. फल्गुनीप्रोष्ठपदानां च नक्षत्रे ८१९॥३॥

६१. छन्दसि पुनर्वस्वोरेकवचनम् ३३८७ ।

६२. विशाखयोश्च ३३८८ ।

६३. तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ८२० ।

६४. सरूपाणामेकशेष एकविभक्तौ १८८ ।

* विरूपाणामपि समानार्थकानामेकशेषो वक्तव्यः ।

६५. वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ९३१ ।

६६. स्त्री पुंवच्च ९३२ ।

६७. पुमान्स्त्रिया ९३३ ।

६८. भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ९३४ ।

६९. नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् [९३५

७०. पिता मात्रा ९३६ ।

७१. श्वशुरः श्वश्र्वा ९३७ ।

७२. त्यदादीनि सर्वैर्नित्यम् ९३८ ।

* त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि ।

* अद्वन्द्वतत्पुरुषविशेषणानाम् ।

७३. ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री ९३९ ।

* अनेकशफेष्विति वक्तव्यम् ।

गाक्कुटाद्युदुपधादपृक्तश्छन्दसि पुनर्वस्वोस्त्रयोदश

इति पाणिनीयसूत्रपाठे प्रथमस्याध्यायस्य द्वितीयः पादः ।

---

## तृतीयः पादः ।

१. भूवादयो धातवः १८ ।

२. उपदेशेऽजनुनासिक इत् ३ ।

३. हलन्त्यम् १ ।

४. न विभक्तौ तुस्माः १९० ।

५. आदिर्ञिटुडवः २२८९ ।

६. षः प्रत्ययस्य ४७४ ।

७. चुटू १८९ ।

* इर इत्संज्ञा वक्तव्या ।

८. लशक्वतद्धिते १९५ ।

९. तस्य लोपः ६२ ।

१०. यथासंख्यमनुदेशः समानाम् १२८ ।

११. स्वरितेनाधिकारः ४६ ।

१२. अनुदात्तङित आत्मनेपदम् २१५७ ।

१३. भावकर्मणोः २६७९ ।

१४. कर्तरि कर्मव्यतिहारे २६८० ।

१५. न गतिहिंसार्थेभ्यः २६८१ ।

* हसादीनामुपसंख्यानम् ।

* हरतेरप्रतिषेधः ।

१६. इतरेतरान्योऽन्योपपदाच्च २६८२ ।

* परस्परोपपदाच्चेति वक्तव्यम् ।

१७. नेर्विशः २६८३ ।

१८. परिव्यवेभ्यः क्रियः २६८४ ।

१९. विपराभ्यां जेः २६८५ ।

२०. आङो दोऽनास्यविहरणे २६८६ ॥१॥

* स्वाङ्गकर्मकाच्चेति वक्तव्यम् ।

२१. क्रीडोऽनुसंपरिभ्यश्च २६८७ ।

* समोऽकूजने ।

* आगमेः क्षमायाम् ।

* शिक्षेर्जिज्ञासायाम् ।

* किरतेर्हर्षजीविकाकुलायकरणेषु ।

* हरतेर्गतताच्छील्ये ।

* आङि नुप्रच्छ्योः ।

* आशिषि नाथः ।
* शप उपालम्भने ।
२२. समवप्रविभ्यः स्थः २६८९ ।
* आङः प्रतिज्ञायाम् ।
२३. प्रकाशनस्थेयाख्ययोश्च २६९० ।
२४. उदोऽनूर्ध्वकर्मणि २६९१ ।
* ईहायामिति वक्तव्यम् ।
२५. उपान्मन्त्रकरणे २६९२ ।
* उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वक्तव्यम्
* वा लिप्सायामिति वक्तव्यम् ।
२६. अकर्मकाच्च २६९३ ।
२७. उद्विभ्यां तपः २६९४ ।
* स्वाङ्गकर्मकाच्च ।
२८. आङो यमहनः २६९५ ।
* स्वाङ्गकर्मकाच्च ।

२९. समो गम्यृच्छिभ्याम् २६९९ ।
* विदिप्रच्छिस्वरतीनामुपसंख्यानम् ।
* अर्तिश्रुदृशिभ्यश्च ।
* उपसर्गादस्यत्यूह्योर्वा वचनम् ।
३०. निसमुपविभ्यो ह्वः २७०३ ।
३१. स्पर्धायामाङः २७०४ ।
३२. गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्न-प्रकथनोपयोगेषु कृञः २७०५ ।
३३. अधेः प्रसहने २७०६ ।
३४. वेः शब्दकर्मणः २७०७ ।
३५. अकर्मकाच्च २७०८ ।
३६. संमाननोत्सञ्जनाचार्यकरणज्ञानभृति-विगणनव्ययेषु नियः २७०९ ।

३७. कर्तृस्थे चाशरीरे कर्मणि २७१० ।
३८. वृत्तिसर्गतायनेषु क्रमः २७११ ।
३९. उपपराभ्याम् २७१२ ।
४०. आङ उद्गमने २७१३ ॥२॥
* ज्योतिरुद्गमन इति वक्तव्यम् ।
४१. वेः पादविहरणे २७१४ ।
४२. प्रोपाभ्यां समर्थाभ्याम् २७१५ ।
४३. अनुपसर्गाद्वा २७१६ ।
४४. अपह्नवे ज्ञः २७१७ ।
४५. अकर्मकाच्च २७१८ ।
४६. संप्रतिभ्यामनाध्याने २७१९ ।
४७. भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः २७२० ।
४८. व्यक्तवाचां समुच्चारणे २७२१ ।
४९. अनोरकर्मकात् २७२२ ।
५०. विभाषा विप्रलापे २७२३ ।
५१. अवाद्ग्रः २७२४ ।
५२. समः प्रतिज्ञाने २७२५ ।
५३. उदश्चरः सकर्मकात् २७२६ ।
५४. समस्तृतीयायुक्तात् २७२७ ।
५५. दाणश्च सा चेच्चतुर्थ्यर्थे २७२८ ।
* अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया भवतीति वक्तव्यम् ।
५६. उपाद्यमः स्वकरणे २७२९ ।
५७. ज्ञाश्रुस्मृदृशां सनः २७३१ ।
५८. नानोर्ज्ञः २७३२ ।
५९. प्रत्याङ्भ्यां श्रुवः २७३३ ।
६०. शदेः शितः २३६२ ॥ ३ ॥

६१. म्रियतेर्लुङ्लिङोश्च २५३८।
६२. पूर्ववत्सनः २७३४।
६३. आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य २२४०।
६४. प्रोपाभ्यां युजेरयज्ञपात्रेषु २७३५।
* स्वराद्यन्तोपसृष्टादिति वक्तव्यम्।
६५. समः क्ष्णुवः २७३६।
६६. भुजोऽनवने २७३७। [२७३८
६७. णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने
६८. भीस्म्योर्हेतुभये २५९४।
६९. गृधिवञ्च्योः प्रलम्भने २७३९।
७०. लियः संमाननशालीनीकरणयोश्च२५९२
७१. मिथ्योपपदात्कृञोऽभ्यासे २७४०।
७२. स्वरितञितः कर्त्रभिप्राये क्रियाफले २१५८।

७३. अपाद्वदः २७४१।
७४. णिचश्च २५६४।
७५. समुदाङ्भ्यो यमोऽग्रन्थे २७४२।
७६. अनुपसर्गाज्ज्ञः २७४३।
७७. विभाषोपपदेन प्रतीयमाने २७४४।
७८. शेषात्कर्तरि परस्मैपदम् २१५९।
७९. अनुपराभ्यां कृञः २७४५।
८०. अभिप्रत्यतिभ्यः क्षिपः २७४६ ॥४॥
८१. प्राद्वहः २७४७।
८२. परेर्मृषः २७४८।
८३. व्याङ्परिभ्यो रमः २७४९।
८४. उपाच्च २७५०।
८५. विभाषाऽकर्मकात् २७५१।
८६. बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः २७५२।

८७. निगरणचलनार्थेभ्यश्च २७५३ ।

* अदेः प्रतिषेधः ।

८८. अणावकर्मकाच्चित्तवत्कर्तृकात् २७५४ ।

८९. न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः २७५५ ।

* पादिषु धेट उपसंख्यानम् ।

९०. वा क्यषः २६६९ ।

९१. द्युद्भ्यो लुङि २३४५ ।

९२. वृद्भ्यः स्यसनोः २३४७ ।

९३. लुटि च क्लृपः २३५१ ।

भूवादयः क्रीडोऽनु वेः पादम्रियतेः प्राद्वहत्रयोदश ॥

इति पाणिनीयसूत्रपाठे प्रथमस्याध्यायस्य तृतीयः पादः ।

## चतुर्थः पादः ।

१. आकडारादेका संज्ञा २३२ ।

२. विप्रतिषेधे परं कार्यम् १७५ ।

३. यू स्त्र्याख्यौ नदी २६६ ।

* प्रथमलिङ्गग्रहणं च ।

४. नेयङुवङ्स्थानावस्त्री ३०३ ।

५. वाऽऽमि ३०४ ।

६. ङिति ह्रस्वश्च २९६ ।

७. शेषो घ्यसखि २४३ ।

८. पतिः समास एव २५७ ।

९. षष्ठीयुक्तश्छन्दसि वा ३३८९ ।

१०. ह्रस्वं लघु ३१ ।

११. संयोगे गुरु ३२ ।

१२. दीर्घं च ३३ ।

१३. यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् [१९९
१४. सुप्तिङन्तं पदम् २९ ।
१५. नः क्ये २६५९ ।
१६. सिति च १२५२ ।
१७. स्वादिष्वसर्वनामस्थाने २३० ।
१८. यचि भम् २३१ ।
* नभोऽङ्गिरोमनुषां वत्युपसंख्यानम् ।
* वृषण् वस्वश्वयोः ।
१९. तसौ मत्वर्थे १८९६ ।
२०. अयस्मयादीनि छन्दसि ३३९० ॥१॥
* उभयसंज्ञान्यपीति वक्तव्यम् ।
२१. बहुषु बहुवचनम् १८७ ।
२२. द्व्येकयोर्द्विवचनैकवचने १८६ ।
२३. कारके ५३४ ।
२४. ध्रुवमपायेऽपादानम् ५८६ ।
* जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् ।
२५. भीत्रार्थानां भयहेतुः ५८८ ।
२६. पराजेरसोढः ५८९ ।
२७. वारणार्थानामीप्सितः ५९० ।
२८. अन्तर्धौ येनादर्शनमिच्छति ५९१ ।
२९. आख्यातोपयोगे ५९२ ।
३०. जनिकर्तुः प्रकृतिः ५९३ ।
३१. भुवः प्रभवः ५९४ ।
३२. कर्मणा यमभिप्रैति स संप्रदानम् ५६९
* क्रियया यमभिप्रैति स संप्रदानम् ।
* कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा वक्तव्या ।
३३. रुच्यर्थानां प्रीयमाणः ५७१ ।
३४. श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ५७२ ।

३५. धारेरुत्तमर्णः ५७३ ।
३६. स्पृहेरीप्सितः ५७४ ।
३७. क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः५७५
३८. क्रुधद्रुहोरुपसृष्टयोः कर्म ५७६ ।
३९. राधीक्ष्योर्यस्य विप्रश्नः ५७७ ।
४०. प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ५७८ ||२
४१. अनुप्रतिगृणश्च ५७९ ।
४२. साधकतमं करणम् ५६० ।
४३. दिवः कर्म च ५६२ ।
४४. परिक्रयणे संप्रदानमन्यतरस्याम्५८० ।
४५. आधारोऽधिकरणम् ६३२ ।
४६. अधिशीङ्स्थासां कर्म ५४२ ।
४७. अभिनिविशश्च ५४३ ।
४८. उपान्वध्याङ्वसः ५४४ ।

* वसेरश्यर्थस्य प्रतिषेधः ।
४९. कर्तुरीप्सिततमं कर्म ५३५ ।
५०. तथायुक्तं चानीप्सितम् ५३८ ।
५१. अकथितं च ५३९ ।

* अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् ।

५२. गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ ५४० ।

* जल्पतिप्रभृतीनामुपसंख्यानम् ।
* दृशेश्च ।
* अदिखाद्योर्न ।
* नीवह्योर्न ।
* नियन्तृकर्तृकस्य वहेरनिषेधः ।
* भक्षेरहिंसार्थस्य न ।
* शब्दायतेर्न ।

५३. हृक्रोरन्यतरस्याम् ५४१।

* अभिवादिदृशोरात्मनेपदे वेति वाच्यम्।

५४. स्वतन्त्रः कर्ता ५५९।

५५. तत्प्रयोजको हेतुश्च २५७५।

५६. प्राग्रीश्वरान्निपाताः १९।

५७. चादयोऽसत्त्वे २०।

३. च वा ह (अह) एव एवम् नूनम् शश्वत् युपत् (युगपत्) (भूयस्) सूपत् कूपत् कुवित् नेत् चेत् चण् कच्चित् यत्र तत्र नह हन्त माकिम् (माकीम्) माकिर् नकिम् (नकीम्) नकिर् (आकीम्) माङ् नञ् तावत् यावत् त्वा त्वे त्वै (द्वै रै) रे श्रौषट् वौषट् वषट् स्वाहा स्वधा ओम् तथा (तथाहि) खलु किल अथ सु (सुष्ठु) स्म अ इ उ ऋ लृ ए ऐ ओ औ आदह उञ् उकञ् वेलायाम् मात्रायाम् यथा यत् तत् किम् पुरा वधा (वध्वा) धिक् हाहा हेहै (हहे) पाट् प्याट् आहो उताहो हो अहो नो (नौ) अथो ननु मन्ये मिथ्या असि ब्रूहि तु नु इति इव वत् वात् वन बत (सम् वशम् शिकम् दिकम्) सनुकम् छंवट् (छंवट) शङ्के शुकम् खम् सनात् सनतर् नहिकम् सत्यम् ऋतम् अद्धा इद्धा नोचेत् नचेत् नहि जातु कथम् कुतः कुत्र अव अनु हा हे (है) आहोस्वित् शम् कम् खम् दिष्टया पशु वट् सह (अनुषट्) आनुषक् अङ्ग फट् ताजक (भाजक्) अये अरे वाट् (चाटु) कुम् खुम् घुम् अम् ईम् सीम् सिम् सि वै। 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः' १६—**आकृतिगणोऽयम्॥ इति चादयः॥**

५८. प्रादयः २१।

४. प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उद् अभि प्रति परि उप – **इति प्रादयः॥**

* मरुच्छब्दस्योपसंख्यानम्।

* श्रच्छब्दस्योपसंख्यानम्।

५९. उपसर्गाः क्रियायोगे २२।

६०. गतिश्च २३ ॥ ३ ॥

* कारिकाशब्दस्योपसंख्यानम् ।

* पुनश्च नसौ छन्दसि ।

* दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः ।

६१. ऊर्यादिच्विडाचश्च ७६२ ।

५. ऊरी उररी तन्थी ताली आताली वेताली धूली धूसी शकला संशकला ध्वंसकला भ्रंसकला गुलुगुधा सजूस् फल फली विक्ली आक्ली आलोष्ठी केवाली केवासी सेवासी (पर्याली) शेवाली वर्षाली अत्यूमशा वश्मशा (मस्मसा) मसमसा औषट् (श्रौषट्) वौषट् वषट् स्वाहा स्वधा बन्धा प्रादुस् श्रत् आविस्—इत्यूर्यादयः ॥

६२. अनुकरणं चानितिपरम् ७६३ ।

६३. आदरानादरयोः सदसती ७६४ ।

६४. भूषणेऽलम् ७६५ ।

६५. अन्तरपरिग्रहे ७६६ ।

* अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् ।

६६. कणेमनसी श्रद्धाप्रतीघाते ७६७ ।

६७. पुरोऽव्ययम् ७६८ ।

६८. अस्तं च ७६९ ।

६९. अच्छ गत्यर्थवदेषु ७७० ।

७०. अदोऽनुपदेशे ७७१ ।

७१. तिरोऽन्तर्धौ ७७२ ।

७२. विभाषा कृञि ७७३ ।

७३. उपाजेऽन्वाजे ७७४ ।

७४. साक्षात्प्रभृतीनि च ७७५ ।

६. साक्षात् मिथ्या चिन्ता भद्रा रोचना आस्था अमा श्रद्धा प्राजर्या प्राजरुहा बीजर्या बीजरुहा संसर्या अर्थे लवणम् उष्णम् शीतम् उदकम् आर्द्रम् अग्नौ वशे विकसने प्रसहने प्रतपने प्रादुस् नमस्—आकृतिगणोऽयम् ॥ इति साक्षात्प्रभृतयः ॥

* च्व्यर्थ इति वक्तव्यम् ।

७५. अनत्याधान उरसिमनसी ७७६ ।
७६. मध्ये पदे निवचने च ७७७ ।
७७. नित्यं हस्ते पाणावुपयमने ७७८ ।
७८. प्राध्वं बन्धने ७७९ ।
७९. जीविकोपनिषदावौपम्ये ७८० ।
८०. ते प्राग्धातोः २२३० ॥ ४ ॥
८१. छन्दसि परेऽपि ३३९१ ।
८२. व्यवहिताश्च ३३९२ ।
८३. कर्मप्रवचनीयाः ५४६ ।
८४. अनुर्लक्षणे ५४७ ।
८५. तृतीयार्थे ५४९ ।
८६. हीने ५५० ।
८७. उपोऽधिके च ५५१ ।
८८. अपपरी वर्जने ५९६ ।
८९. आङ्मर्यादावचने ५९७ ।
* आङ्मर्यादाभिविध्योरिति वक्तव्यम् ।
९०. लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ५५२ ।
९१. अभिरभागे ५५३ ।
९२. प्रतिः प्रतिनिधिप्रतिदानयोः ५९९ ।
९३. अधिपरी अनर्थकौ ५५४ ।
९४. सुः पूजायाम् ५५५ ।
९५. अतिरतिक्रमणे च ५५६ ।
९६. अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु ५५७ ।
९७. अधिरीश्वरे ६४४ ।
९८. विभाषा कृञि ६४६ ।
९९. लः परस्मैपदम् २१५५ ।

१००. तङानावात्मनेपदम् २१५६ ॥ ५ ॥

१०१. तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः २१६० ।

१०२. तान्येकवचनद्विवचनबहुवचनान्येकशः २१६१ ।

१०३. सुपः १८५ ।

१०४. विभक्तिश्च १८४ ।

१०५. युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः २१६२ ।

१०६. प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च २१६३ ।

१०७. अस्मद्युत्तमः २१६४ ।

१०८. शेषे प्रथमः २१६५ ।

१०९. परः संनिकर्षः संहिता २८ ।

११०. विरामोऽवसानम् २७ ।

आ कडाराद्द्वहुष्वनुप्रतिगृण ऊर्यादिच्छन्दसि तिङो दश ॥

इति पाणिनीयसूत्रपाठे प्रथमस्याध्यायस्य चतुर्थः पादः अध्यायश्च ।

## ॥ अथ द्वितीयोऽध्यायः ॥

### प्रथमः पादः ।

१. समर्थः पदविधिः ६४७ ।

२. सुबामन्त्रिते पराङ्गवत्स्वरे ३६५६ ।

* षष्ठ्यामन्त्रितकारकवचनम् ।

* सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्या-
  नमनन्तरत्वात् ।

* पूर्वाङ्गवच्चेति वक्तव्यम् ।

* अव्ययानां न ।

* अव्ययीभावस्य त्विष्यते ।

३. प्राक्कडारात्समासः ६४८ ।

४. सह सुपा ६४९ ।

* इवेन समासो विभक्त्यलोपश्च ।

५. अव्ययीभावः ६५१ ।

६. अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभा-
वात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानु-
पूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्त-
वचनेषु ६५२ ।

७. यथाऽसादृश्ये ६६१ ।

८. यावदवधारणे ६६२ ।

९. सुप्प्रतिना मात्रार्थे ६६३ ।

१०. अक्षशलाकासंख्याः परिणा ६६४ ।

११. विभाषा ६६५ ।

१२. अपपरिबहिरञ्चवः पञ्चम्या ६६६ ।

१३. आङ्मर्यादाभिविध्योः ६६७ ।

१४. लक्षणेनाभिप्रती आभिमुख्ये ६६८ ।

१५. अनुर्यत्समया ६६९ ।

१६. यस्य चायामः ६७० ।

१७. तिष्ठद्गुप्रभृतीनि च ६७१ ।

७. तिष्ठद्गु वहद्गु आयतीगवम् खलेयवम् खलेबुसम् लूनयवम् लूयमानयवम् पूतयवम् पूयमानयवम् संहृतयवम् संह्रियमाणयवम् संहृतबुसम् संह्रियमाणबुसम् समभूमि समपदाति सुषमम् विषमम् दुःषमम् निःषमम् अपसमम् आयतीसमम् ( प्रोढम् ) पापसमम् पुण्यसमम् प्राह्णम् प्ररथम् प्रमृगम् प्रदक्षिणम् (अपरदक्षिणम्) संप्रति असंप्रति । 'इच्प्रत्ययः समासान्तः' १७—**इति तिष्ठद्गुप्रभृतयः ॥**

१८. पारे मध्ये षष्ठ्या वा ६७२ ।

१९. संख्या वंश्येन ६७३ ।

२०. नदीभिश्च ६७४ ॥ १ ॥

२१. अन्यपदार्थे च संज्ञायाम् ६७५ ।

२२. तत्पुरुषः ६८४ ।

२३. द्विगुश्च ६८५ ।

२४. द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ६८६ ।

* गम्यादीनामुपसंख्यानम् ।

२५. स्वयं क्तेन ६८७ ।

२६. खट्वा क्षेपे ६८८ ।

२७. सामि ६८९ ।

२८. कालाः ६९० ।

२९. अत्यन्तसंयोगे च ६९१ ।

३०. तृतीया तत्कृतार्थेन गुणवचनेन ६९२ ।

३१. पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ६९३ ।

* अवरस्योपसंख्यानम् ।

३२. कर्तृकरणे कृता बहुलम् ६९४ ।

३३. कृत्यैरधिकार्थवचने ६९५ ।

३४. अन्नेन व्यञ्जनम् ६९६ ।

३५. भक्ष्येण मिश्रीकरणम् ६९७ ।

३६. चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ६९८

* अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् ।

३७. पञ्चमी भयेन ६९९ ।

* भयभीतभीतिभीभिरिति वक्तव्यम् ।

* भयनिर्गतजुगुप्सुभिरिति वक्तव्यम् ।

३८. अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ७००

३९. स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ७०१

४०. सप्तमी शौण्डैः ७१७ ॥२॥

८. शौण्ड धूर्त कितव व्याड प्रवीण संवीत अन्तर अधि पटु पण्डित कुशल चपल निपुण—इति शौण्डादयः ॥

४१. सिद्धशुष्कपक्वबन्धैश्च ७१८ ।

४२. ध्वाङ्क्षेण क्षेपे ७१९ ।

४३. कृत्यैर्ऋणे ७२० ।

४४. संज्ञायाम् ७२१ ।

४५. क्तेनाहोरात्रावयवाः ७२२ ।

४६. तत्र ७२३ ।

४७. क्षेपे ७२४ ।

४८. पात्रेसमितादयश्च ७२५ ।

९. पात्रेसमिताः पात्रेबहुलाः उदुम्बरमशकः (उदुम्बरमशकाः) उदुम्बरकृमिः कूपकच्छपः अवटकच्छपः कूपमण्डूकः कुम्भमण्डूकः उदपानमण्डूकः नगरकाकः

नगरवायसः मातरिपुरुषः पिण्डीशूरः पितरिशूरः गेहेशूरः गेहेनर्दी गेहेक्ष्वेडी गेहेविजिती गेहेव्याडः गेहेमेही (गेहेदाही) गेहेदृप्तः गेहेधृष्टः गर्भेतृप्तः आखनिकबकः गोष्ठेशूरः गोष्ठेविजिती गोष्ठेक्ष्वेडी गोष्ठेपटुः गोष्ठेपण्डितः गोष्ठेप्रगल्भः कर्णेटिरिटिरा कर्णेचुरुचुरा—**आकृतिगणोऽयम्। इति पात्रेसमितादयः ॥**

४९. **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ७२६ ।**

५०. **दिक्संख्ये संज्ञायाम् ७२७ ।**

५१. **तद्धितार्थोत्तरपदसमाहारे च ७२८ ।**

* **द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् ।**

* **उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसंख्यानम् ।**

५२. **संख्यापूर्वो द्विगुः ७३० ।**

५३. **कुत्सितानि कुत्सनैः ७३२ ।**

५४. **पापाणके कुत्सितैः ७३३ ।**

५५. **उपमानानि सामान्यवचनैः ७३४ ।**

५६ **उपमितं व्याघ्रादिभिःसामान्याप्रयोगे ७३५**

१०. व्याघ्र सिंह ऋक्ष ऋषभ चन्दन वृक वृष वराह हस्तिन् तरु कुञ्जर रुरु पृषत् पुण्डरीक पलाश कितव—**इति व्याघ्रादयः ॥ आकृतिगणोऽयम्** । तेन—मुखपद्मम् मुखकमलम् करकिसलयम् पार्थिवचन्द्रः इत्यादि ॥

५७. **विशेषणं विशेष्येण बहुलम् ७३६ ।**

५८. **पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ७३७ ।**

५९. **श्रेण्यादयः कृतादिभिः ७३८ ।**

११. श्रेणि [ऊक] एक पूग कुन्दुम (मुकुन्द) [राशि] निचय [विशेष] निधन (विधान) [पर] इन्द्र देव मुण्ड भूत श्रमण वदान्य अध्यापक अभिरूपक ब्राह्मण क्षत्रिय

[विशिष्ट] पटु पण्डित कुशल चपल निपुण कृपण — **इत्येते श्रेण्यादयः** ॥ १२. कृत मित मत भूत उक्त [युक्त] समाज्ञात समाम्नात समाख्यात संभावित [संसेवित] अवधारित अवकल्पित निराकृत उपकृत उपाकृत [दृष्ट कलित दलित उदाहृत विश्रुत उदित] — **आकृतिगणोऽयम्** ॥ **इति कृतादयः** ॥

*** श्रेण्यादिषु च्व्यर्थवचनम् ।**

६०. **क्तेन नञ्विशिष्टेनानञ्** ७३९ ॥ ३ ॥

*** शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् ।**

[१३. (वा. १३१४) । शाकपार्थिव कुतपसौश्रुत अजातौल्वलि — **आकृतिगणोऽयम्** ॥ कृतापकृत भुक्तविभुक्त पीतविपीत गतप्रत्यागत यातानुयात क्रयाक्रयिका पुटापुटिका फलाफलिका [मानोन्मानिका] — **इति शाकपार्थिवादयः** ॥]

६१. **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** ७४०

६२. **वृन्दारकनागकुञ्जरैः पूज्यमानम्** ७४१ ।

६३. **कतरकतमौ जातिपरिप्रश्ने** ७४२ ।

६४. **किं क्षेपे** ७४३ ।

६५. **पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः** ७४४ ।

६६. **प्रशंसावचनैश्च** ७४७ ।

६७. **युवा खलतिपलितवलिनजरतीभिः** ७४८

६८. **कृत्यतुल्याख्या अजात्या** ७४९ ।

६९. **वर्णो वर्णेन** ७५० ।

७०. **कुमारः श्रमणादिभिः** ७५२ ।

१४. श्रमणा प्रव्रजिता कुलटा गर्भिणी तापसी दासी बन्धकी अध्यापक अभिरूपक पण्डित पटु मृदु कुशल चपल निपुण — **इति श्रमणादयः** ॥

**७१. चतुष्पादो गार्भिण्या ७५३।**

* चतुष्पाज्जातिरिति वक्तव्यम्।

**७२. मयूरव्यंसकादयश्च ७५४।**

१५ मयूरव्यंसक छात्रव्यंसक कम्बोजमुण्ड यवनमुण्ड छन्दासि। हस्तेगृह्य (हस्तगृह्य) पादेगृह्य (पादगृह्य) लाङ्गूलेगृह्य (लाङ्गूलगृह्य) पुनर्दाय। 'एहीडादयोऽन्यपदार्थे' १८। एहीडं वर्तते। एहियवं वर्तते। एहिवाणिजा क्रिया। अपेहिवाणिजा प्रेहिवाणिजा एहिस्वागता अपेहिस्वागता एहिद्वितीया अपेहिद्वितीया प्रेहिद्वितीया एहिकटा अपेहिकटा प्रेहिकटा आहरकटा प्रेहिकर्दमा प्रोहकर्दमा विधमचूडा उद्धमचूडा (उद्धरचूडा) आहरचेला आहरवसना [आहरसेना] आहरवनिता (आहरविनता) कृन्तविचक्षणा उद्धरोत्सृजा उद्धरावसृजा उद्धमविधमा उत्पचनिपचा उत्पतनिपता उच्चावचम् उच्चनीचम् आचोपचम् आचपराचम् नखप्रचम् निश्चप्रचम् अकिञ्चन स्नात्वाकालक पीत्वास्थिरक भुक्त्वासुहित प्रोष्यपापीयान् उत्पत्यपाकला निपत्यरोहिणी निषण्णश्यामा अपेहिप्रघसा एहिविघसा इहपञ्चमी इहद्वितीया। 'जहि कर्मणा बहुलमाभीक्ष्ण्ये' १९। कर्तारं चाभिदधाति। जहिजोडः (जहिजोडम्) जहिस्तम्बम् (जहिस्तम्बः) [उज्जहिस्तम्बम्]। 'आख्यातमाख्यातेन क्रियासातत्ये' २०। अश्नीतपिबता पचतभृज्जता खादतमोदता खादतवमता (खादताचमता) आहरनिवपा आहरनिष्किरा (आवपनिष्किरा) उत्पचविपचा भिन्धिलवणा कृन्धिविचक्षणा पचलवणा पचप्रकूटा—**आकृतिगणोऽयम्** तेन। अकुतोभयः कान्दिशीकः (कान्देशीकः) आहोपुरुषा आहोपुरुषिका अहमहमिका यदृच्छा एहिरेयाहिरा उन्मृजावमृजा द्रव्यान्तरम् अवश्यकार्यम्॥ **इति मयूरव्यंसकादयः॥**

**समर्थोऽन्यपदार्थे च सिद्धशुष्कसन्महद्द्वादश।**

इति पाणिनीयसूत्रपाठे द्वितीयस्याध्यायस्य प्रथमः पादः।

## द्वितीयः पादः।

१. पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे [७१२

२. अर्धं नपुंसकम् ७१३।

३. द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् [७१४

४. प्राप्तापन्ने च द्वितीयया ७१५।

५. कालाः परिमाणिना ७१६।

६. नञ् ७५६।

७. ईषदकृता ७५५।

* ईषद्गुणवचनेनेति वक्तव्यम्।

८. षष्ठी ७०२।

* कृद्योगा च षष्ठी समस्यत इति वक्तव्यम्।

९. याजकादिभिश्च ७०३।

१६. याजक पूजक परिचारक परिवेषक (परिषेचक) स्नापक अध्यापक उत्साहक उद्वर्तक होतृ भर्तृ रथगणक पत्तिगणक—इति याजकादयः॥

१०. न निर्धारणे ७०४।

* प्रतिपदविधाना च षष्ठी न समस्यत इति वक्तव्यम्।

११. पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ७०५।

१२. क्तेन च पूजायाम् ७०६।

१३. अधिकरणवाचिना च ७०७।

१४. कर्मणि च ७०८।

१५. तृजकाभ्यां कर्तरि ७०९।

१६. कर्तरि च ७१०।

१७. नित्यं क्रीडाजीविकयोः ७११।

१८. कुगतिप्रादयः ७६१।

* कर्मप्रवचनीयानां प्रतिषेधः।

* प्रादयो गताद्यर्थे प्रथमया।

* अत्यादयः क्रान्ताद्यर्थे द्वितीयया।

* अवादयः क्रुष्टाद्यर्थे तृतीयया ।

* पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ।

* निरादयः क्रान्ताद्यर्थे पञ्चम्या ।

* इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च ।

१९. उपपदमतिङ् ७८२ ।

२०. अमैवाव्ययेन ७८३ ॥ १ ॥

२१. तृतीयाप्रभृतीन्यन्यतरस्याम् ७८४ ।

२२. क्त्वा च ७८५ ।

२३. शेषो बहुव्रीहिः ८२९ ।

२४. अनेकमन्यपदार्थे ८३० ।

* प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः ।

* नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः ।

२५. संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये ८४३ ।

२६. दिङ्नामान्यन्तराले ८४५ ।

२७. तत्र तेनेदमिति सरूपे ८४६ ।

२८. तेन सहेति तुल्ययोगे ८४८ ।

* सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः ।

२९. चार्थे द्वन्द्वः ९०१ ।

३०. उपसर्जनं पूर्वम् ६५४ ।

३१. राजदन्तादिषु परम् ९०२ ।

१७. राजदन्तः अग्रेवणम् लिप्तवासितम् नग्नमुषितम् सिक्तसंमृष्टम् मृष्टलुञ्चितम् अवक्लिन्नपक्वम् आर्पितोप्तम् उप्तगाढम् उलूखलमुसलम् तण्डुलकिण्वम् दृषदुपलम् आरड्वायनि (आरग्वायनबन्धकी) चित्ररथबाह्लीकं अवन्त्यश्मकं शूद्रार्यं स्नातकराजानौ विष्वक्सेनार्जुनौ अक्षिभ्रुवम् दारगवम् शब्दार्थौ धर्मार्थौ कामार्थौ अर्थशब्दौ अर्थधर्मौ अर्थकामौ वैकारिमतं गाजवाजम् (गोजवाजं) गोपालिधानपूलासं (गोपालधानीपूलासम्) पूलासकारण्डं (पूलासककुरण्डम्) स्थूलासम् (स्थूलपूलासम्) उशीरबीजं [जिज्ञास्थि] सिञ्जास्थम् (सिञ्जाश्वत्थं)

चित्रास्वाती (चित्रस्वाती) भार्यापती दम्पती जम्पती जायापती पुत्रपती पुत्रपशू केशश्मश्रू शिरोबीजु (शिरोबीजम्) शिरोजानु सर्पिर्मधुनी मधुसर्पिषी [आद्यन्तौ] अन्तादी गुणवृद्धी वृद्धिगुणौ—**इति राजदन्तादयः॥**

**३२. द्वन्द्वे घि ९०३।**

**३३. अजाद्यदन्तम् ९०४।**

**३४. अल्पाच्तरम् ९०५।**

* **अनेकप्राप्तावेकस्य नियमोऽनियमः शेषे।**
* **ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणाम्।**
* **अभ्यर्हितं च।**
* **लघ्वक्षरम्।**
* **वर्णानामानुपूर्व्येण।**
* **भ्रातुश्च ज्यायसः।**
* **संख्याया अल्पीयस्याः।**
* **धर्मादिषूभयम्।**

**३५. सप्तमीविशेषणे बहुव्रीहौ ८९८।**

* **सर्वनामसंख्ययोरुपसंख्यानम्।**
* **वा प्रियस्य।**
* **गड्वादिभ्यः परा सप्तमी।**

**३६. निष्ठा ८९९।**

* **जातिकालसुखादिभ्यः परानिष्ठा।**
* **प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ।**

**३७. वाऽऽहिताग्न्यादिषु ९००।**

१८. आहिताग्नि जातपुत्र जातदन्त जातश्मश्रु तैलपीत घृतपीत [मद्यपीत] ऊढभार्य गतार्थ—**आकृतिगणोऽयम्॥** तेन। गडुकण्ठ अस्युद्यत (अस्मुद्यत) दण्डपाणिप्रभृतयोऽपि॥ **इत्याहिताग्न्यादयः॥**

**३८. कडाराः कर्मधारये ७५१।**

१९. कडार गडुल खञ्ज खोड काण कुण्ठ खलति गौर वृद्ध भिक्षुक पिङ्ग पिङ्गुल (पिङ्गल) तड तनु [जठर] बधिर मठर कञ्ज बर्बर—**इति कडारादयः॥**

**पूर्वापराधरोत्तरं तृतीयाप्रभृतीन्यष्टादश॥**

इति पाणिनीयसूत्रपाठे द्वितीयस्याध्यायस्य द्वितीयः पादः।

## तृतीयः पादः ।

१. अनभिहिते ५३६

* तिङ्कृत्तद्धितसमासैः परिसंख्यानम् ।

२. कर्मणि द्वितीया ५३७ ।

* उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥

* अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि ।

३. तृतीया च होश्छन्दसि ३३९४ ।

४. अन्तरान्तरेणयुक्ते ५४५ ।

५. कालाध्वनोरत्यन्तसंयोगे ५५८ ।

६. अपवर्गे तृतीया ५६३ ।

७. सप्तमीपञ्चम्यौ कारकमध्ये ६४३ ।

८. कर्मप्रवचनीययुक्ते द्वितीया ५४८ ।

९. यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ६४५ ।

१०. पञ्चम्यपाङ्परिभिः ५९८ ।

११. प्रतिनिधिप्रतिदाने च यस्मात् ६०० ।

१२ गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ५८५ ।

१३. चतुर्थी संप्रदाने ५७० ।

* तादर्थ्ये चतुर्थी वक्तव्या ।

* क्लृपि संपद्यमाने च ।

* उत्पातेन ज्ञापिते च ।

* हितयोगे च ।

१४. क्रियार्थोपपदस्य च कर्मणि स्थानिनः ५८१ ।

१५. तुमर्थाच्च भाववचनात् ५८२ ।

१६. नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ५८३ ।

* अलमिति पर्याप्त्यर्थग्रहणम् ।

१७. मन्यकर्मण्यनादरे विभाषाऽप्राणिषु५८४

* अप्राणिष्वित्यपनीय नौकाकान्नशुकसृगालवर्जेष्विति वाच्यम् ।

२०. नौ काक अन्न शुक शृगाल—इति नावादयः ॥

१८. कर्तृकरणयोस्तृतीया ५६१ ।

* प्रकृत्यादिभ्य उपसंख्यानम् ।

२१. (वा १४६८) । प्रकृति प्राय गोत्र सम विषम द्विद्रोण पञ्चक साहस्र—इति प्रकृत्यादयः ॥

१९. सहयुक्तेऽप्रधाने ५६४ ।

२०. येनाङ्गविकारः ५६५ ॥ १ ॥

२१. इत्थंभूतलक्षणे ५६६ ।

२२. संज्ञोऽन्यतरस्यां कर्मणि ५६७ ।

२३. हेतौ ५६८ ।

* निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम् ।

२४. अकर्तर्यृणे पञ्चमी ६०१ ।

२५. विभाषा गुणेऽस्त्रियाम् ६०२ ।

२६. षष्ठी हेतुप्रयोगे ६०७ ।

२७. सर्वनाम्नस्तृतीया च ६०८ ।

२८. अपादाने पञ्चमी ५८७ ।

* ल्यब्लोपे कर्मण्यधिकरणे च ।

* यतश्चाध्वकालनिमानं तत्र पञ्चमी तद्युक्तादध्वनः प्रथमासप्तम्यौ कालात्सप्तमी च वक्तव्या ।

२९. अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते ५९५ ।

३०. षष्ठ्यतसर्थप्रत्ययेन ६०९ ।

३१. एनपा द्वितीया ६१० ।

३२. पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ६०३ ।

३३. करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ६०४ ।

३४. दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ६११।

३५. दूरान्तिकार्थेभ्यो द्वितीया च ६०५ ।

३६. सप्तम्यधिकरणे च ६३३ ।

* क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् ।

* साध्वसाधुप्रयोगे च ।

* अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च ।

* निमित्तात्कर्मसंयोगे ।

३७. यस्य च भावेन भावलक्षणम् ६३४ ।

३८. षष्ठी चानादरे ६३५ ।

३९. स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ६३६ ।

४०. आयुक्तकुशलाभ्यां चासेवायाम् ६३७ ।

४१. यतश्च निर्धारणम् ६३८ ।

४२. पञ्चमी विभक्ते ६३९ । [६४०

४३. साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ।

* अप्रत्यादिभिरिति वक्तव्यम् ।

२२. प्रति परि अनु—एते प्रत्यादयः ।

४४. प्रसितोत्सुकाभ्यां तृतीया च ६४१ ।

४५. नक्षत्रे च लुपि ६४२ ।

४६. प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ५३२ ।

४७. संबोधने च ५३३ ।

४८. सामन्त्रितम् ४११ ।

४९. एकवचनं संबुद्धिः १९२।

५०. षष्ठी शेषे ६०६।

५१. ज्ञोऽविदर्थस्य करणे ६१२।

५२. अधीगर्थदयेशां कर्मणि ६१३।

५३. कृञः प्रतियत्ने ६१४।

५४. रुजार्थानां भाववचनानामज्वरेः ६१५।

* अज्वरिसन्ताप्योरिति वक्तव्यम्।

५५. आशिषि नाथः ६१६। [६१७

५६. जासिनिप्रहणनाटक्राथपिषां हिंसायाम्

५७. व्यवहृपणोः समर्थयोः ६१८।

५८. दिवस्तदर्थस्य ६१९।

५९. विभाषोपसर्गे ६२०।

६०. द्वितीया ब्राह्मणे ३३९५ ॥ ३ ॥

६१. प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ६२१।

* हविषोऽप्रस्थितस्य।

६२. चतुर्थ्यर्थे बहुलं छन्दसि ३३९६।

* षष्ठ्यर्थे चतुर्थी।

६३. यजेश्च करणे ३३९७।

६४. कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ६२२।

६५. कर्तृकर्मणोः कृति ६२३।

* गुणकर्मणि वेष्यते।

६६. उभयप्राप्तौ कर्मणि ६२४।

* स्त्रीप्रत्यययोरकाकारयोर्नायं नियमः।

* शेषे विभाषा।

६७. क्तस्य च वर्तमाने ६२५।

६८. अधिकरणवाचिनश्च ६२६।

६९. न लोकाव्ययनिष्ठाखलर्थतृनाम् ६२७।

* उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः।

* अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः ।

* द्विषः शतुर्वा ।

७०. अकेनोर्भविष्यदाधमर्ण्ययोः ६२८ ।

७१. कृत्यानां कर्तरि वा ६२९ । [६३०

७२. तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्

७३. चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ६३१ ।

अनभिहित इत्थंभूतयतश्च प्रेष्यब्रुवोस्त्रयोदश ।

इति पाणिनीयसूत्रपाठे द्वितीयस्याध्यायस्य तृतीयः पादः ।

## चतुर्थः पादः ।

१. द्विगुरेकवचनम् ७३१ ।

२. द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ९०६ ।

३. अनुवादे चरणानाम् ९०७ ।

* स्थेणोर्लुङीति वक्तव्यम् ।

४. अध्वर्युक्रतुरनपुंसकम् ९०८ ।

५. अध्ययनतोऽविप्रकृष्टाख्यानाम् ९०९ ।

६. जातिरप्राणिनाम् ९१० ।

७. विशिष्टलिङ्गो नदीदेशोऽग्रामाः ९११ ।

८. क्षुद्रजन्तवः ९१२ ।

९. येषां च विरोधः शाश्वतिकः ९१३ ।

१०. शूद्राणामनिरवसितानाम् ९१४ ।

११. गवाश्वप्रभृतीनि च ९१५ ।

२३. गवाश्वम् गवाविकम् गवैडकम् अजाविकम् [अजैडकम्] कुब्जवामनम् कुब्जकिरातम् पुत्रपौत्रम् श्वचण्डालम् स्त्रीकुमारम् दासीमाणवकम् शाटीपटीरम् शाटीप्रच्छदम् शाटीपट्टिकम् उष्ट्रखरम् उष्ट्रशशम् मूत्रशकृत् मूत्रपुरीषम् यकृन्मेदः मांसशोणितम् दर्भशरम् दर्भपूतीकम् अर्जुनशिरीषम् अर्जुनपुरुषम् तृणोपलम्

(तृणोलपम्) दासीदासम् कुटाकुटम् भागवतीभागवतम् **इति गवाश्वप्रभृतीनि॥**

१२. **विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्वबडबपूर्वापराधरोत्तराणाम्** ९१६

* **बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम्।**

१३. **विप्रतिषिद्धं चानधिकरणवाचि** ९१७।

१४. **न दधिपयआदीनि** ९१८।

२४. दधिपयसी सर्पिर्मधुनी मधुसर्पिषी ब्रह्मप्रजापती शिववैश्रवणौ स्कन्दविशाखौ परिव्राजककौशिकौ (परिव्राट्कौशिकौ) प्रवर्ग्योपसदौ शुक्लकृष्णौ इध्माबर्हिषी दीक्षातपसी [श्रद्धातपसी मेधातपसी] अध्ययनतपसी उलूखलमुसले आद्यवसाने श्रद्धामेधे ऋक्सामे वाङ्मनसे—**इति दधिपयआदीनि॥**

१५. **अधिकरणैतावत्त्वे च** ९१९।

१६. **विभाषा समीपे** ९२०।

१७. **स नपुंसकम्** ८२१।

१८. **अव्ययीभावश्च** ६५९।

१९. **तत्पुरुषोऽनञ्कर्मधारयः** ८२२।

२०. **संज्ञायां कन्थोशीनरेषु** ८२३॥ १॥

२१. **उपज्ञोपक्रमं तदाद्याचिख्यासायाम्** ८२४

२२. **छाया बाहुल्ये** ८२५।

२३. **सभा राजाऽमनुष्यपूर्वा** ८२६।

२४. **अशाला च** ८२७। [८२८

२५. **विभाषा सेनासुराच्छायाशालानिशानाम्**

२६. **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः** ८१२।

* **द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः।**

२७. **पूर्ववदश्वबडबौ** ८१३।

२८. **हेमन्तशिशिरावहोरात्रे च छन्दसि** ३३९९।

२९. रात्राह्नाहाः पुंसि ८१४ ।

* अनुवाकादयः पुंसि ।

* संख्यापूर्वं रात्रं क्लीबम् ।

३०. अपथं नपुंसकम् ८१५

* पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा ।

* पथः संख्याव्ययादेः ।

* अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः ।

* आबन्तो वा ।

* अनो नलोपश्च वा द्विगुः स्त्रियाम् ।

* पात्राद्यन्तस्य न ।

* सामान्ये नपुंसकम् ।

३१. अर्धर्चाः पुंसि च ८१६ ।

२५. अर्धर्च गोमय कषाय कार्षापण कुतप कुसप (कुणप) कपाट शङ्ख गूथ यूथ ध्वज कबन्ध पद्म गृह सरक कंस दिवस यूष अन्धकार दण्ड कमण्डलु मण्ड भूत द्वीप द्यूत चक्र धर्म कर्मन् मोदक शतमान यान नख नखर चरण पुच्छ दाडिम हिम रजत सक्तु पिधान सार पात्र घृत सैन्धव औषध आढक चषक द्रोण खलीन पात्रीव षष्टिक वारबाण (वारवारण) प्रोथ कपित्थ [शुष्क] शाल शील शुक्ल (शुल्क) शीधु कवच रेणु [ऋण] कपट शीकर मुसल सुवर्ण वर्ण पूर्व चमस क्षीर कर्ष आकाश अष्टापद मङ्गल निधन निर्यास जृम्भ वृत्त पुस्त बुस्त क्ष्वेडित शृङ्ग निगड [खल] मूलक मधु मूल स्थूल शराव नाल वप्र विमान मुख प्रग्रीव शूल वज्र कटक कण्टक (कर्पट) शिखर कल्क (वल्कल) नटमक (नाट-मस्तक) वलय कुसुम तृण पङ्क कुण्डल किरीट (कुमुद) अर्बुद अङ्कुश तिमिर आश्रय भूषण इक्वस (इष्वास) मुकुल वसन्त तटाक (तडाग) पिटक विटङ्क विडङ्ग पिण्याक माष कोश फलक दिन दैवत पिनाक समर स्थाणु अनीक उपवास शाक कर्पास (विशाल) चषाल (चखाल) खण्ड दर विटप (रण बल मक) मृणाल हस्त आर्द्र हल (सूत्र) ताण्डव गाण्डीव मण्डप पटह सौध योध पार्श्व शरीर फल (छल) पुर (पुरा) राष्ट्र अम्बर बिम्ब कुट्टिम मण्डल

(कुक्कुट) कुडप ककुद खन्डल तोमर तोरण मञ्चक पञ्चक पुङ्ख मध्य (बाल) छाल वल्मीक वर्ष वस्त्र वसु देह उद्यान उद्योग स्नेह स्तेन (स्तन स्वर) संगम निष्क क्षेम शूक क्षत्र पवित्र (यौवन कलह) मालक (पालक) मूषिक (मण्डल वल्कल) कुज (कुञ्ज) विहार लोहित विषाण भवन अरण्य पुलिन दृढ आसन ऐरावत शूर्प तीर्थ लोमन (लोमश) तमाल लोह दण्डक शपथ प्रतिसर दारु धनुस् मान वर्चस्क कूर्च तण्डक मठ सहस्र ओदन प्रवाल शकट अपराह्ण नीड शकल तण्डुल—
इत्यर्धर्चादिः॥

३२. इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ३५०

३३. एतदस्त्रतसोस्त्रतसौ चानुदात्तौ १९६२

३४. द्वितीयाटौस्स्वेनः ३५१।

* अन्वादेशे नपुंसके एनद्वक्तव्यः।

३५. आर्धधातुके २४३२।

३६. अदो जग्धिर्ल्यप्ति किति ३०८०।

३७. लुङ्सनोर्घस्लृ २४२७।

* घस्लृ भावेऽच्युपसंख्यानम्।

३८. घञपोश्च ३२३६।

३९. बहुलं छन्दसि ३३९८।

४०. लिट्यन्यतरस्याम् २४२४ ॥२॥

४१. वेञो वयिः २४११।

४२. हनो वध लिङि २४३३।

४३. लुङि च २४३४।

४४. आत्मनेपदेष्वन्यतरस्याम् २६९६।

४५. इणो गा लुङि २४५८।

* इण्वदिक इति वक्तव्यम्।

४६. णौ गमिरबोधने २६०७।

४७. सनि च २६१५।

४८. इङश्च २६१६।

४९. गाङ्लिटि २४५९ ।

५०. विभाषा लुङ्लृङोः २४६० ।

५१. णौ च संश्चङोः २५७९ ।

५२. अस्तेर्भूः २४७० ।

५३. ब्रुवो वचिः २४५३ ।

५४. चक्षिङः ख्याञ् २४३६ ।

* वर्जने प्रतिषेधः ।

* असनयोश्च ।

५५. वा लिटि २४३७ ।

५६. अजेर्व्यघञपोः २२९२ ।

* घञपोः प्रतिषेधे क्य उपसंख्यानम् ।

* वलादावार्धधातुके वेष्यते ।

५७. वा यौ ३२९२ ।  [१२७६

५८. ण्यक्षत्रियार्षञितो यूनि लुगणिञोः

५९. पैलादिभ्यश्च १०८४ ।

२६. पैल शालङ्कि सात्यकि सात्यंकामि राहवि रावणि औदञ्चि औदव्रजि औदमेघि औदव्यज्रि (औदमज्जि) औदभृज्जि दैवस्थानि पैङ्गलौदायनि राहक्षति (राह क्षति) भौलिङ्गि राणि औदन्यि औद्गाहमानि औजिहानि औदशुद्धि 'तद्राजाच्चाणः' २१ (तद्राज)—आकृतिगणोऽयम् ॥ इति पैलादिः ॥

६०. इञः प्राचाम् १०८५  ॥ ३ ॥

६१. न तौल्वलिभ्यः १०८६ ।

२७. तौल्वलि धारणि पारणि रावणि दैलीपि दैवति वार्कलि नैवति (नैवकि) दैवमित्रि (दैवमति) दैवयज्ञि चाफट्ठकि बैल्वकि वैकि (वैङ्कि) आनुहारति (आनुराहति) पौष्करसादि आनुरोहति आनुति प्रादोहनि नैमिश्रि प्राडाहति बान्धकि वैशीति आसिनासि आहिंसि आसुरि नैमिषि आसिबन्धकि पौष्पि कारेणुपालि वैकर्णि वैरकि वैहति—इति तौल्वल्यादिः ॥

**६२. तद्राजस्य बहुषु तेनैवास्त्रियाम् ११९३ ।**

**६३. यस्कादिभ्यो गोत्रे ११४६ ।**

२८. यस्क लह्य द्रुह्य अयस्थूण (अयःस्थूण) तृणकर्ण सदामत्त कम्बलहार बहिर्योग कर्णाढक पर्णाढक पिण्डीजङ्घ बकसस्थ (बकसक्थ) विश्रि कुद्रि अजबस्ति मित्रयु रक्षोमुख जङ्घारथ उत्कास कटुक मथक (मन्थक) पुष्करट् (पुष्करसद्) विषपुट उपरिमेखल क्रोष्टुकमान (क्रोष्टुमान) क्रोष्टुपाद क्रोष्टुमाय शीर्षमाय खरप पदक वर्मुक भलन्दन भडिल भण्डिल भडित भण्डित – **एते यस्कादयः** ॥

**६४. यञञोश्च ११०८ ।**

*** यञादीनामेकस्य द्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम्**

**६५. अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ११४७ ।**

**६६. बह्वच इञः प्राच्यभरतेषु ११४८ ।**

**६७. न गोपवनादिभ्यः ११४९ ।**

२९. गोपवन शेयु (शिग्रु) बिन्दु भाजन अश्वावतान श्यामाक (श्योमाक) श्यामक श्यापर्ण—**बिदाद्यन्तर्गणोऽयं गोपवनादिः** ॥

**६८. तिककितवादिभ्यो द्वन्द्वे ११५० ।**

३०. तिककितवाः वङ्खरभण्डीरथाः उपकलमकाः पफकनरकाः बकनखगुदपरिणद्धाः उब्जककुभाः लङ्कशान्तमुखाः उत्तरशलङ्कटाः कृष्णाजिनकृष्णसुन्दराः भ्रष्टककपिष्ठलाः अग्निवेशदशेरुकाः—**एते तिककितवादयः** ॥

**६९. उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ११५१ ।**

३१. उपक लमक भ्रष्टक कपिष्ठल कृष्णाजिन कृष्णसुन्दर चूडारक आडारक गडुक उदङ्क सुधायुक अबन्धक पिङ्गलक पिष्ट क सुपिष्ट (सुपिष्ठ) मयूरकर्ण खरीजङ्घ शलाथल पतञ्जल पदञ्जल कठेरणि कुषीतक काशकृत्स्न (काशकृत्स्न) निदाघ कलशीकण्ठ दामकण्ठ कृष्णपिङ्गल कर्णक

पर्णक जटिरक बधिरक जन्तुक अनुलोम अनुपद प्रति लोम अपजग्ध प्रनान अर्नाअहित कमक वराटक लेखाभ्र कमन्दक पिञ्जूलक वर्णक मसूरकर्ण मदाघ कबन्तक कमन्तक कदामत्त दामकण्ठ—**एते उपकादयः ॥**

७०. आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ११५२ ।

७१. सुपो धातुप्रातिपदिकयोः ६५० ।

७२. अदिप्रभृतिभ्यः शपः २४२३ ।

७३. बहुलं छन्दसि ३४०० ।

७४. यङोऽचि च २६५० ।

७५. जुहोत्यादिभ्यः श्लुः २४८९ ।

७६. बहुलं छन्दसि ३४०१ । [२२२३

७७. गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु

* गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम् ।

७८. विभाषा घ्राधेट्शाच्छासः २३७६ ।

७९. तनादिभ्यस्तथासोः २५४७ ।

८०. मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ३४०२　　॥ ४ ॥

८१. आमः २२३८ ।

८२. अव्ययादाप्सुपः ४५२ ।

८३. नाव्ययीभावादतोऽम्त्वपञ्चम्याः ६५७ ।

८४. तृतीयासप्तम्योर्बहुलम् ६५८ ।

८५. लुटः प्रथमस्य डारौरसः २१८८ ।

द्विगुरुपञ्चोपक्रमं वेञो वयिनं तौल्वलिभ्य आमः पञ्च ।

इति पाणिनीयसूत्रपाठे द्वितीयस्याध्यायस्य चतुर्थः पादः अध्यायश्च ।

# ॥ अथ तृतीयोऽध्यायः ॥

## प्रथमः पादः ।

१. प्रत्ययः १८० ।
२. परश्च १८१ ।
३. आद्युदात्तश्च ३७०८ ।
४. अनुदात्तौ सुप्पितौ ३७०९ ।
५. गुप्तिज्किद्भ्यः सन् २३९३ ।[२३९४
६. मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य
७. धातोः कर्मणः समानकर्तृकादिच्छायां वा २६०८ ।
* आशङ्कायां सन्वक्तव्यः ।
८. सुप आत्मनः क्यच् २६५७ ।
* मान्तादव्ययाच्च क्यच् न ।
९. काम्यच्च २६६३ ।
१०. उपमानादाचारे २६६४ ।
* अधिकरणाच्चेति वक्तव्यम् ।
११. कर्तुः क्यङ् सलोपश्च २६६५ ।
* आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः ।
१२. भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः २६६७

३२. भृश शीघ्र चपल मन्द पण्डित उत्सुक सुमनस् दुर्मनस् अभिमनस् उन्मनस रहस् रोहत् रेहत् संश्वत् तृपत् शश्वत् भ्रमत् वेहत् शुचिस् शुचिवर्चस् अण्डरवर्चस् ओजस् सुरजस् अरजस्—**एते भृशादयः** ॥

**१३. लोहितादिडाज्भ्यः क्यष् २६६८ ।**

३३. लोहित चरित नील फेन मद्र हरित दास मन्द—**लोहितादिराकृतिगणः** ॥

* लोहितडाज्भ्यः क्यष्वचनम् ।

* भृशादिष्वितराणि ।

**१४. कष्टाय क्रमणे २६७० ।**

* सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् ।

**१५. कर्मणो रोमन्थतपोभ्यां वर्तिचरोः २६७१ ।**

* हनुचलन इति वक्तव्यम् ।

* तपसः परस्मैपदं च ।

**१६. बाष्पोष्मभ्यामुद्वमने २६७२ ।**

* फेनाच्चेति वक्तव्यम् ।

**१७. शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे २६७३ ।**

* सुदिनदुर्दिननीहारेभ्यश्च ।

**१८. सुखादिभ्यः कर्तृवेदनायाम् २६७४ ।**

३४. सुख दुःख तृप्त कृच्छ्र अस्र आस्र अलीक प्रतीप करुण कृपण सोढ—**इत्येतानि सुखादीनि** ॥

**१९. नमोवरिवश्चित्रङः क्यच् २६७५ ।**

* नमसः पूजायाम् ।

* वरिवसः परिचर्यायाम् ।

* चित्रङ आश्चर्ये ।

**२०. पुच्छभाण्डचीवराण्णिङ् २६७६ ॥१॥**

* भाण्डात्समाचयने।

* चीवरादार्जने परिधाने च।

* पुच्छादुदसने व्यसने पर्यसने च।

२१. मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृत-तूस्तेभ्यो णिच् २६७७।

* हलिकल्योरत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्।

२२. धातोरेकाचो हलादेः क्रियासमभिहारे यङ् २६२९।

* सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ्वाच्यः।

२३. नित्यं कौटिल्ये गतौ २६३४।

२४. लुपसदचरजपजभदहदशगृभ्यो भाव-गर्हायाम् २६३५।

२५. सत्यापपाशरूपवीणातूलश्लोकसेनालोम-त्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् २५६३

* अर्थवेदसत्यानामापुक्।

२६. हेतुमति च २५७६।

* तत्करोति तदाचष्टे।

* आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्।

* प्रातिपदिकाद्धात्वर्थे बहुलम्।

* धातुरूपं च।

* कर्तृकरणाद्धात्वर्थे।

* (बहुलमेतन्निदर्शनम्।)

* णिङङ्गान्निरसने।

२७. कण्ड्वादिभ्यो यक् २६७८।

३५. कण्डूञ् मन्तु हृणीङ् वल्गु असु (मनस्) महीङ् लाट् लेट् इरस् इरज् (इरञ्) दुवस् उषस् वेट् मेधा कुषुभ (नमस्) मगध तन्तस् पम्पस् (पपस्) सुख दुःख (भिक्ष चरण चरम अवर) सपर अरर (अरर्) भिषज् भिष्णुज् (अपर आर) इषुध वरण चुरण तुरण भुरण गद्गद एला केला खेला (वेला शेला) लिट् लोट् लेखा

लेख) रेखा द्रवस् तिरस् अगद उरस् तरण (तरिण) पयस् संभूयस सम्बर—आकृतिगणोऽयम् ॥ इति कण्ड्वादिः ॥

२८. गुपूधूपविच्छिपणिपनिभ्य आयः२३०३

२९. ऋतेरीयङ् २४२२ ।

३०. कमेर्णिङ् २३१० ।

३१. आयादय आर्धधातुके वा २३०५ ।

३२. सनाद्यन्ता धातवः २३०४ ।

३३. स्यतासी लृलुटोः २१८६ ।

३४. सिब्बहुलं लेटि ३४२५ ।

* सिब्बहुलं छन्दसि णिद्वक्तव्यः ।

३५. कास्प्रत्ययादाममन्त्रे लिटि २३०६ ।

* कास्यनेकाज्ग्रहणं कर्तव्यम् ।

३६. इजादेश्च गुरुमतोऽनृच्छः २२३७ ।

३७. दयायासश्च २३२४ ।

३८. उषविदजागृभ्योऽन्यतरस्याम् २३४१ ।

३९. भीह्रीभृहुवां श्लुवच्च २४९१ ।

४०. कृञ्चानुप्रयुज्यते लिटि २२३९ ॥२॥

४१. विदांकुर्वन्त्वित्यन्यतरस्याम् २४६५ ।

४२. अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि [३४०३

४३. च्लि लुङि २२२१ ।

४४. च्लेः सिच् २२२२ ।

* स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वक्तव्यः ।

४५. शल इगुपधादनिटः क्सः २३३६ ।

४६. श्लिष आलिङ्गने २५१४ ।

४७. न दृशः २४०७ ।

४८. णिश्रिद्रुस्रुभ्यः कर्तरि चङ् २३१२ ।

* कमेश्च्लेश्चङ्वक्तव्यः ।

४९. विभाषा धेट्श्व्योः २३७५ ।
५०. गुपेश्छन्दसि ३४०४ । [३४०५
५१. नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः
५२. अस्यतिवक्तिख्यातिभ्योऽङ् २४३८ ।
५३. लिपिसिचिह्वश्च २४१८ ।
५४. आत्मनेपदेष्वन्यतरस्याम् २४१९ ।
५५. पुषादिद्युताद्य्लृदितः परस्मैपदेषु २३४३
५६. सर्तिशास्त्यर्तिभ्यश्च २३८२ ।
५७. इरितो वा २२६९ ।
५८. जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च २२९१ ।
५९. कृमृदृरुहिभ्यश्छन्दसि ३४०६ ।
६०. चिण्ते पदः २५१३ ॥ ३ ॥
६१. दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् २३२८ ।
६२. अचः कर्मकर्तरि २७६८ ।
६३. दुहश्च २७६९ ।
६४. न रुधः २७७० ।
६५. तपोऽनुतापे च २७६० ।
६६. चिण्भावकर्मणोः २७५८ ।
६७. सार्वधातुके यक् २७५६ ।
६८. कर्तरि शप् २१६७ ।
६९. दिवादिभ्यः श्यन् २५०५ ।
७०. वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः
७१. यसोऽनुपसर्गात् २५२१ । [२३२१
७२. संयसश्च २५२२ ।
७३. स्वादिभ्यः श्नुः २५२३ ।

७४. श्रुवः शृ च २३८६।

७५. अक्षोऽन्यतरस्याम् २३३८।

७६. तनूकरणे तक्षः २३३९।

७७. तुदादिभ्यः शः २५३४।

७८. रुधादिभ्यः श्नम् २५४३।

७९. तनादिकृञ्भ्य उः २४६६।

८०. धिन्विकृण्व्योर च २३३२॥ ४॥

८१. क्र्यादिभ्यः श्ना २५५४। [२५५५

८२. स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च

८३. हलः श्नः शानज्झौ २५५७।

८४. छन्दसि शायजपि ३४३२।

८५. व्यत्ययो बहुलम् ३४३३।

८६. लिङ्याशिष्यङ् ३४३४।

* दृशोरग्वक्तव्यः।

८७. कर्मवत्कर्मणा तुल्यक्रियः २७६६।

* सकर्मकाणां प्रतिषेधो वक्तव्यः।

* दुहिपच्योर्बहुलं सकर्मकयोः।

* सृजियुज्योः श्यंस्तु।

* सृजेः श्रद्धोपपन्ने कर्तर्येवेति वाच्यम्।

* भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्।

८८. तपस्तपःकर्मकस्यैव २७७१।

८९. न दुहस्नुनमां यक्चिणौ २७६७।

* यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम्।

* यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्।

९०. कुषिरजोः प्राचां श्यन्परस्मैपदं च [२७७२

९१. धातोः २८२९।

९२. तत्रोपपदं सप्तमीस्थम् ७८१।

९३. कृदतिङ् ३७४।

९४. वाऽसरूपोऽस्त्रियाम् २८३० ।
९५. कृत्याः (प्राङ्ण्वुलः) २८३१ ।
९६. तव्यत्तव्यानीयरः २८३४ ।
* केलिमर उपसंख्यानम् ।
* वसेस्तव्यत्कर्तरि णिच्च ।
९७. अचो यत् २८४२ ।
* तकिशसिचतियतिजनिभ्यो यद्वाच्यः ।
* हनो वा यद्वधश्च वक्तव्यः ।
९८. पोरदुपधात् २८४४ ।
९९. शकिसहोश्च २८४७ । [॥ ५ ॥
१००. गदमदचरयमश्चानुपसर्गे २८४८ ।
* चरेराङि चागुरौ ।
१०१. अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु [२८४९
१०२. वह्यं करणम् २८५०
१०३. अर्यः स्वामिवैश्ययोः २८५१ ।
१०४. उपसर्या काल्या प्रजने २८५२ ।
१०५. अजर्यं सङ्गतम् २८५३ ।
१०६. वदः सुपि क्यप्च २८५४ ।
१०७. भुवो भावे २८५५ ।
१०८. हनस्त च २८५६ ।
१०९. एतिस्तुशास्वृदृजुषः क्यप् २८५७ ।
* आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम् ।
* शंसिदुहिगुहिभ्यो वा ।
११०. ऋदुपधाच्चाक्लृपिचृतेः २८५९ ।
१११. ई च खनः २८६० ।
११२. भृञोऽसंज्ञायाम् २८६१ ।
* समश्च बहुलम् ।
११३. मृजेर्विभाषा २८६२ ।

११४. राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः २८६५ ।

११५. भिद्योद्ध्यौ नदे २८६६ ।

११६. पुष्यसिध्यौ नक्षत्रे २८६७ ।

११७. विपूयविनीयजित्या मुञ्जकल्कहलिषु २८६८ ।

११८. प्रत्यपिभ्यां ग्रहेः २८६९ ।

* छन्दसीति वक्तव्यम् ।

११९. पदास्वैरिबाह्यापक्ष्येषु च २८७० ।

१२०. विभाषा कृवृषोः २८७१ ॥ ६ ॥

१२१. युग्यं च पत्रे २८७३ ।

१२२. अमावस्यदन्यतरस्याम् २८७४ ।

१२३. छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्याप्रच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ३४०७

* हिरण्य इति वक्तव्यम् ।

१२४. ऋहलोर्ण्यत् २८७२ ।

* पाणौ सृजेर्ण्यत् ।

* समवपूर्वाच्च ।

* लपिदभिभ्यां चेति वक्तव्यम् ।

१२५. ओरावश्यके २८८६ ।

१२६. आसुयुवपिरपित्रपिचमश्च २८८७ ।

१२७. आनाय्योऽनित्ये २८८८ ।

१२८. प्रणाय्योऽसंमतौ २८८९ ।

१२९. पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु २८९० ।

१३०. क्रतौ कुण्डपाय्यसंचाय्यौ २८९१

4

१३१. अग्नौ परिचाय्योपचाय्यसमूह्याः २८९२।

१३२. चित्याग्निचित्ये च २८९३।

१३३. ण्वुल्तृचौ २८९५।

१३४. नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः २८९६।

३६ 'नन्दिवाशिमदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम्' २२। नन्दनः वाशनः मदनः दूषणः साधनः वर्धनः शोभनः रोचनः। 'सहितपिदमः संज्ञायाम्' २३। सहनः तपनः दमनः जल्पनः रमणः दर्पणःसंक्रन्दनः संकर्षणः संहर्षणः जनार्दनः यवनः मधुसूदनः विभीषणः लवणः चित्तविनाशनः कुलदमनः (शत्रुदमनः)॥ इति नन्द्यादिः॥

३७. ग्राही उत्साही उद्दासी उद्भासी स्थायी मन्त्री संमर्दी। 'रक्षश्रुवपशां नौ' २४। निरक्षी निश्रावी निवापी निशायी। 'याचृव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानाम्' २५। अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी। 'अचामचित्तकर्तृकाणाम्' २६। अकारी अहारी अविनायी (विशायी विषायी) 'विशयी विषयी देशे' २७। विशयी विषयी देशः। 'अभिभावी भूते' २८। अपराधी उपरोधी परिभवी परिभावी॥ इति ग्रहादिः॥

३८. पच वच वप वद चल पत नदट् भषट् प्लवट् चरट् गरट् तरट् चोरट् गाहट् सूरट् देवट् (दोषट्) जर (रज) मर (मद) क्षम (क्षप) सेव मेष कोप (कोष) मेध नर्त व्रण दर्श सर्प [दम्भ दर्प] जारभर श्वपच॥ इति पचादिराकृतिगणः॥

१३५. इगुपधज्ञाप्रीकिरः कः २८९७।

१३६. आतश्चोपसर्गे २८९८।

१३७. पाघ्राध्माधेट्दृशः शः २८९९।

* घ्रः संज्ञायां न।

१३८. अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च २९००।

* नौ लिम्पेः ।

* गवादिषु विन्देः संज्ञायामुपसंख्यानम् ।

१३९. ददातिदधात्योर्विभाषा २९०१ ।

१४०. ज्वलितिकसन्तेभ्यो णः २९०२॥७॥

* तनोतेर्ण उपसंख्यानम् ।

१४१. श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिष-श्वसश्च २९०३ ।

१४२. दुन्योरनुपसर्गे २९०४ ।

१४३. विभाषा ग्रहः २९०५ ।

१४४. गेहे कः २९०६ ।

१४५. शिल्पिनि ष्वुन् २९०७ ।

* नृतिखनिरञ्जिभ्य इति वक्तव्यम् ।

१४६. गस्थकन् २९०८ ।

१४७. ण्युट् च २९०९ ।

१४८. हश्च व्रीहिकालयोः २९१० ।

१४९. प्रुसृल्वः समभिहारे वुन् २९११ ।

* साधुकारिण्युपसंख्यानम् ।

१५०. आशिषि च २९१२ ।

प्रत्ययो मुण्डविदां दीपजनकर्यादिभ्योऽवद्य-
युग्यं च श्याद्व्यधा दश ॥

इति पाणिनीयसूत्रपाठे तृतीयस्याध्यायस्य प्रथमः पादः ।

## द्वितीयः पादः ।

१. कर्मण्यण् २९१३ ।

* शीलिकामिभक्ष्याचरिभ्यो णः ।

* ईक्षिक्षमिभ्यां चेति वक्तव्यम् ।

२. ह्वावामश्च २९१४ ।

३. आतोऽनुपसर्गे कः २९१५ ।

* काविधौ सर्वत्र प्रसारणिभ्यो डः।

४. सुपि स्थः २९१६।

५. तुन्दशोकयोः परिमृजापनुदोः २९१९।

* आलस्यसुखाहरणयोरिति वक्तव्यम्।

* कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्।

३९ (वा १९९२)। मूलविभुज नखमुच काकगुह कुमुद महीध्र कुध्र गिध्र—आकृतिगणोऽयम्॥ इति मूलविभुजादयः॥

६. प्रे दाज्ञः २९२०।

७. समि ख्यः २९२१।

८. गापोष्टक् २९२२।

* पिबतेः सुराशीध्वोरिति वक्तव्यम्।

* बहुलं तणि।

९. हरतेरनुद्यमनेऽच् २९२३।

* शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसंख्यानम्।

* सूत्रे च धार्येऽर्थे।

१०. वयसि च २९२४।

११. आङि ताच्छील्ये २९२५।

१२. अर्हः २९२६।

१३. स्तम्बकर्णयो रमिजपोः २९२७।

* हस्तिसूचकयोरिति वक्तव्यम्।

१४. शमि धातोः संज्ञायाम् २९२८।

* शमि संज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम्।

१५. अधिकरणे शेतेः २९२९।

* पार्श्वादिषूपसंख्यानम्।

४०. (वा १९९९)। पार्श्व उदर पृष्ठ उत्तान अपमूर्धन्—इति पार्श्वादिः॥

* दिग्धसहपूर्वाच्चेति वक्तव्यम् ।
* उत्तानादिषु कर्तृषु ।
* गिरौ डश्छन्दसि ।

१६. चरेष्टः २९३० ।
१७. भिक्षासेनादायेषु च २९३१ ।
१८. पुरोऽग्रतोऽग्रेषु सर्तेः २९३२ ।
१९. पूर्वे कर्तरि २९३३ । [॥१॥
२०. कृञो हेतुताच्छील्यानुलोम्येषु २९३४
२१. दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु २९३५ ।

* किंयत्तद्बहुषु कृञोऽज्विधानम् ।

२२. कर्मणि भृतौ २९३६ ।
२३. न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु २९३७ ।
२४. स्तम्बशकृतोरिन् २९३८ ।

* व्रीहिवत्सयोरिति वक्तव्यम् ।

२५. हरतेर्दृतिनाथयोः पशौ २९३९ ।
२६. फलेग्रहिरात्मंभरिश्च २९४० ।
२७. छन्दसि वनसनरक्षिमथाम् ३४०८ ।
२८. एजेः खश् २९४१ ।

* वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्य उपसंख्यानम् ।

२९. नासिकास्तनयोर्ध्माधेटोः २९४४ ।

* स्तने धेटः ।
* नासिकायां ध्मश्च ।
* घटिखारीखरीषूपसंख्यानम् ।

३०. नाडीमुष्ट्योश्च २९४५ ।

३१. उदि कूले रुजिवहोः २९४६ ।
३२. वहाभ्रे लिहः २९४७ ।
३३. परिमाणे पचः २९४८ ।
३४. मितनखे च २९४९ ।
३५. विध्वरुषोस्तुदः २९५० ।
३६. असूर्यललाटयोर्दृशितपोः २९५१ ।
३७. उग्रम्पश्येरम्मदपाणिन्धमाश्च २९५२
३८. प्रियवशे वदः खच् २९५३ ।
* गमेः सुपि वाच्यः ।
* विहायसो विह इति वाच्यम् ।
* खच्च डिद्वा वाच्यः ।
* डे च विहायसो विहादेशो वक्तव्यः ।
३९. द्विषत्परयोस्तापेः २९५४ ।
४०. वाचि यमो व्रते २९५६ ॥२॥

४१. पूःसर्वयोर्दारिसहोः २९५८ ।
* भगे च दारेरिति काशिका ।
४२. सर्वकूलाभ्रकरीषेषु कषः २९५९ ।
४३. मेघर्तिभयेषु कृञः २९६० ।
४४. क्षेमप्रियमद्रेऽण्च २९६१ ।
४५. आशिते भुवः करणभावयोः २९६२ ।
४६. संज्ञायां भृतॄवृजिधारिसहितपिदमः २९६३ ।
४७. गमश्च २९६४ । [२९६५
४८. अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः
* डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानम् ।
* उरसो लोपश्च ।
* सुदुरोरधिकरणे ।
* निसो देशे ।
* अन्यत्रापि दृश्यत इति वक्तव्यम् ।

४९. आशिषि हनः २९६६ ।

* दारावाहनोऽणन्तस्य च टः संज्ञायाम् ।

* चारौ वा ।

* कर्मणि समि च ।

५०. अपे क्लेशतमसोः २९६७ ।

५१. कुमारशीर्षयोर्णिनिः २९६८ ।

५२. लक्षणे जायापत्योष्टक् २९६९ ।

५३. अमनुष्यकर्तृके च २९७० ।

५४. शक्तौ हस्तिकवाटयोः २९७१ ।

५५. पाणिघताडघौ शिल्पिनि २९७२ ।

* राजघ उपसंख्यानम् ।

५६. आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् २९७३

५७. कर्तरि भुवः खिष्णुच्खुकञौ २९७४ ।

५८. स्पृशोऽनुदके क्विन् ४३२ ।

५९. ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३७३ । [॥ ३ ॥

६०. त्यदादिषु दृशोऽनालोचने कञ्च ४२९ ।

* समानान्ययोश्चेति वक्तव्यम् ।

* दृशेः क्सश्चेति वक्तव्यम् ।

६१. सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् २९७५ ।

६२. भजो ण्विः २९७६ ।

६३. छन्दसि सहः ३४०९ ।

६४. वहश्च ३४१० ।

६५. कव्यपुरीषपुरीष्येषु ञ्युट् ३४११ ।

६६. हव्येऽनन्तःपादम् ३४१२ ।

६७. जनसनखनक्रमगमो विट् ३४१३ ।

६८. अदोऽनन्ने २९७७ ।

६९. क्रव्ये च २९७८ ।

७०. दुहः कब्घश्च २९७९ । [३४१४ ।

७१. मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्

* श्वेतवहादीनां डस् पदस्येति वक्तव्यम् ।

* अवया श्वेतवाः पुरोडाश्च ।

७२. अवे यजः ३४१५ ।

७३. विजुपे छन्दसि ३४१७ ।

७४. आतो मनिन्क्वनिब्वनिपश्च ३४१८ ।

७५. अन्येभ्योऽपि दृश्यन्ते २९८० ।

७६. क्विप्च २९८३ ।

७७. स्थः क च २९८७ ।

७८. सुप्यजातौ णिनिस्ताच्छील्ये २९८८ ।

णिन्विधौ साधुकारिण्युपसंख्यानम् ।

* ब्रह्मणि वदः ।

७९. कर्तर्युपमाने २९८९ ।

८०. व्रते २९९० । ॥ ४ ॥

८१. बहुलमाभीक्ष्ण्ये २९९१ ।

८२. मनः २९९२ ।

८३. आत्ममाने खश्च २९९३ ।

८४. भूते २९९५ ।

८५. करणे यजः २९९६ ।

८६. कर्मणि हनः २९९७ ।

८७. ब्रह्मभ्रूणवृत्रेषु क्विप् २९९८ ।

८८. बहुलं छन्दसि ३४१९ ।

८९. सुकर्मपापमन्त्रपुण्येषु कृञः २९९९ ।

९०. सोमे सुञः ३००० ।

९१ अग्नौ चेः ३००१ ।

९२. कर्मण्यग्न्याख्यायाम् ३००२ ।
९३. कर्मणीनिविक्रियः ३००३ ।
* कुत्सितग्रहणं कर्तव्यम् ।
९४. दृशेः क्वनिप् ३००४ ।
९५. राजनि युधिकृञः ३००५ ।
९६. सहे च ३००६ ।
९७. सप्तम्यां जनेर्डः ३००७ ।
९८. पञ्चम्यामजातौ ३००८ ।
९९. उपसर्गे च संज्ञायाम् ३००९ ।
१००. अनौ कर्मणि ३०१० । ॥ ५ ॥
१०१. अन्येष्वपि दृश्यते ३०११ ।
* अन्येभ्योऽपि दृश्यते ।
१०२. निष्ठा ३०१३ ।
* आदिकर्मणि निष्ठा वक्तव्या ।
१०३. सुयजोर्ङ्वनिप् ३०९१ ।
१०४. जीर्यतेरतृन् ३०९२ ।
१०५. छन्दसि लिट् ३०९३ ।
१०६. लिटः कानज्वा ३०९४ ।
१०७. क्वसुश्च ३०९५ ।
१०८. भाषायां सदवसश्रुवः ३०९७ ।
१०९. उपेयिवाननाश्वाननूचानश्च ३०९८ ।
११०. लुङ् २२१८ ।
१११. अनद्यतने लङ् २२०५ ।
११२. अभिज्ञावचने लृट् २७७३ ।
११३. न यदि २७७४ ।
११४. विभाषा साकाङ्क्षे २७७५ ।
११५. परोक्षे लिट् २१७१ ।
* अत्यन्तापह्नवे लिड्वक्तव्यः ।

११६. हशश्वतोर्लङ् च २७७६ ।
११७. प्रश्ने चासन्नकाले २७७७ ।
११८. लट् स्मे २७७८ ।
११९. अपरोक्षे च २७७९ ।
१२०. ननौ पृष्टप्रतिवचने २७८० ॥६॥
१२१. नन्वोर्विभाषा २७८१ ।
१२२. पुरि लुङ्चास्मे २७८२ ।
१२३. वर्तमाने लट् २१५१ ।
१२४. लटः शतृशानचावप्रथमासमानाधिकरणे ३१०० ।
१२५. संबोधने च ३१०२ ।
१२६. लक्षणहेत्वोः क्रियायाः ३१०३ ।
१२७. तौ सत् ३१०६ ।
१२८. पूङ्यजोः शानन् ३१०८ ।
१२९. ताच्छील्यवयोवचनशक्तिषु चानश् ३१०९ ।
१३०. इङ्धार्योः शत्रकृच्छ्रिणि ३११० ।
१३१. द्विषोऽमित्रे ३१११ ।
१३२. सुञो यज्ञसंयोगे ३११२ ।
१३३. अर्हः प्रशंसायाम् ३११३ ।
१३४. आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु [३११४ ।
१३५. तृन् ३११५ ।

* तृन्विधावृत्विक्षु चानुपसर्गस्य ।
* नयतेः षुक् ।
* त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं च ।
* क्षदेश्च युक्ते ।
* छन्दसि तृच ।

१३६. अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच ३११६

१३७. णेश्छन्दसि ३११७।

१३८. भुवश्च ३११८।

१३९. ग्लाजिस्थश्च ग्स्नुः ३११९।

१४०. त्रसिगृधिधृषिक्षिपेः क्नुः ३१२०।७

१४१. शमित्यष्टाभ्यो घिनुण् ३१२१।

१४२. संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ३१२२।

१४३. वौ कपलसकत्थस्रम्भः ३१२३।

१४४. अपे च लषः ३१२४।

१४५. प्रे लपसृद्रुमथवदवसः ३१२५।

१४६. निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् ३१२६।

१४७. देविक्रुशोश्चोपसर्गे ३१२७।

१४८. चलनशब्दार्थादकर्मकाद्युच् ३१२८।

१४९. अनुदात्तेतश्च हलादेः ३१२९।

१५०. जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ३१३०।

१५१. क्रुधमण्डार्थेभ्यश्च ३१३१।

१५२. न यः ३१३२।

१५३. सूददीपदीक्षश्च ३१३३।

१५४. लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ३१३४।

१५५. जल्पभिक्षकुट्टलुण्टवृङः षाकन् ३१३५

१५६. प्रजोरिनिः ३१३६ ।
१५७. जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभू-
प्रसूभ्यश्च ३१३७ ।
१५८. स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य
आलुच् ३१३८ ।
१५९. दाधेट्सिशदसदो रुः ३१३९ ।
१६०. सृघस्यदः क्मरच् ३१४० ॥ ८ ॥
१६१. भञ्जभासमिदो घुरच् ३१४१ ।
१६२. विदिभिदिच्छिदेः कुरच् ३१४२ ।
१६३. इण्नशिजिसर्तिभ्यः क्वरप् ३१४३ ।
१६४. गत्वरश्च ३१४४ ।
१६५. जागुरूकः ३१४५ ।
१६६. यजजपदशां यङः ३१४६ । [३१४७
१६७. नमिकम्पिस्म्यजसकमहिंसदीपो रः

१६८. सनाशंसभिक्ष उः ३१४८ ।
१६९. विन्दुरिच्छुः ३१४९ ।
१७०. क्याच्छन्दसि ३१५० [३१५१
१७१. आदृगमहनजनः किकिनौ लिट् च
* भाषायां धाञ्कृसृगमिजनिनमिभ्यः ।
* सासहिवावहिचाचलिपापतीनामुपसंख्यानम् ।
१७२. स्वपितृषोर्नजिङ् ३१५२ ।
* धृषेश्चेति वाच्यम् ।
१७३. शृवन्द्योरारुः ३१५३ ।
१७४. भियः क्रुक्लुकनौ ३१५४ ।
* क्रुकन्नपि वक्तव्यः ।
१७५. स्थेशभासपिसकसो वरच् ३१५५ ।
१७६. यश्च यङः ३१५६ ।

---

१. 'गमि' इति न भाष्ये ।

१७७. भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ३१५७ ।

१७८. अन्येभ्योऽपि दृश्यते ३१५८ ।

* क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च ।

* द्युतिगमिजुहोतीनां द्वे च ।

* जुहोतेर्दीर्घश्च ।

* दृणातेर्ह्रस्वश्च ।

* ध्यायतेः संप्रसारणं च ।

१७९. भुवः संज्ञान्तरयोः ३१५९ ।

१८०. विप्रसंभ्यो ड्वसंज्ञायाम् ३१६०॥९।

* डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानम् ।

१८१. धः कर्मणि ष्ट्रन् ३१६१ ।

१८२. दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ३१६२ ।

१८३. हलसूकरयोः पुवः ३१६४ ।

१८४. अर्तिलूधूसूखनसहचर इत्रः ३१६५ ।

१८५. पुवः संज्ञायाम् ३१६६ ।

१८६. कर्तरि चर्षिदेवतयोः ३१६७ ।

१८७. ञीतः क्तः ३०८८ ।

१८८. मतिबुद्धिपूजार्थेभ्यश्च ३०८९ ।

कर्मणि दिवापूःसर्वसत्सूबहुलमन्येष्वपि नन्वोः शमिति भञ्जभासधः कर्मण्यष्टौ ।

इति पाणिनीयसूत्रपाठे तृतीयस्याध्यायस्य द्वितीयः पादः ।

## तृतीयः पादः ।

१. उणादयो बहुलम् ३१६९ ।

२. भूतेऽपि दृश्यन्ते ३१७० ।

३. भविष्यति गम्यादयः ३१७१ ।

४१. गमी आगमी भावी प्रस्थायी प्रतिरोधी प्रतियोधी प्रतिबोधी प्रतियायी प्रतियोगी—एते गम्यादयः।

४. यावत्पुरानिपातयोर्लट् २७८३ ।

५. विभाषा कदाकर्ह्योः २७८४ ।

६. किंवृत्ते लिप्सायाम् २७८५ ।

७. लिप्स्यमानसिद्धौ च २७८६ ।

८. लोडर्थलक्षणे च २७८७ ।

९. लिङ् चोर्ध्वमौहूर्तिके २७८८ ।

१०. तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् [३१७५ ।

११. भाववचनाश्च ३१८० ।

१२. अण्कर्मणि च ३१८१ ।

१३. लृट् शेषे च[1] ३१९३ ।

१४. लृटः सद्वा ३१०७ ।

१५. अनद्यतने लुट् २१८५ ।

१६. पदरुजविशस्पृशो घञ् ३१८२ ।

* स्पृश उपतापे ।

१७. सृ स्थिरे ३१८३ ।

* व्याधिमत्स्यबलेषु चेति वाच्यम् ।

१८. भावे ३१८४ ।

१९. अकर्तरि च कारके संज्ञायाम् ३१८६ ।

२०. परिमाणाख्यायां सर्वेभ्यः ३१९०॥१॥

* दारजारौ कर्तरि णिलुक् च ।

२१. इङश्च ३१९१ ।

* अपादाने स्त्रियामुपसंख्यानम् तदन्ताच्च वा ङीष् ।

* शृवायुवर्णनिवृतेषु ।

२२. उपसर्गे रुवः ३१९२ ।

---

१. चरहितः पाठो भाष्ये ।

२३. समि युद्रुदुवः ३१९४ ।
२४. श्रिणीभुवोऽनुपसर्गे ३१९५ ।
२५. वौ क्षुश्रुवः ३१९६ ।
२६. अवोदोर्नियः ३१९७ ।
२७. प्रे द्रुस्तुस्रुवः ३१९८ ।
२८. निरभ्योः पूल्वोः ३१९९ ।
२९. उन्न्योर्ग्रः ३२०० ।
३०. कॄ धान्ये ३२०१ ।
३१. यज्ञे समि स्तुवः ३२०२ ।
३२. प्रे स्त्रोऽयज्ञे ३२०३ ।
३३. प्रथने वावशब्दे ३२०४ ।
३४. छन्दोनाम्नि च ३२०५ ।
३५. उदि ग्रहः ३२०७ ।
३६. समि मुष्टौ ३२०८ ।
३७. परिन्योर्नीणोर्द्यूताभ्रेषयोः ३२०९ ।
३८. परावनुपात्यय इणः ३२१० ।
३९. व्युपयोः शेतेः पर्याये ३२११ ।
४०. हस्तादाने चेरस्तेये ३२१२ ॥ २ ॥
४१. निवासचितिशरीरोपसमाधानेष्वादेश्च कः ३२१३
४२. सङ्घे चानौत्तराधर्ये ३२१४ ।
४३. कर्मव्यतिहारे णच्स्त्रियाम् ३२१५ ।
४४. अभिविधौ भाव इनुण् ३२१८ ।
४५. आक्रोशेऽवन्योर्ग्रहः ३२२० ।
४६. प्रे लिप्सायाम् ३२२१ ।
४७. परौ यज्ञे ३२२२ ।
४८. नौ वृ धान्ये ३२२३ ।
४९. उदि श्रयतियौतिपूद्रुवः ३२२४ ।

५०. विभाषाऽऽङि रुप्लुवोः ३२२५ ।

५१. अवे ग्रहो वर्षप्रतिबन्धे ३२२६ ।

५२. प्रे वणिजाम् ३२२७ ।

५३. रश्मौ च ३२२८ ।

५४. वृणोतेराच्छादने ३२२९ ।

५५. परौ भुवोऽवज्ञाने ३२३० ।

५६. एरच् ३२३१ ।

* भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम् ।

* जवसवौ छन्दसि वक्तव्यौ ।

५७. ऋदोरप् ३२३२ ।

५८. ग्रहवृदृनिश्चिगमश्च ३२३४ ।

* वशिरण्योश्चोपसंख्यानम् ।

* घञर्थे कविधानम् ।

५९. उपसर्गेऽदः ३२३५ ।

६०. नौ ण च ३२३७ । ॥ ३ ॥

६१. व्यधजपोरनुपसर्गे ३२३८ ।

६२. स्वनहसोर्वा ३२३९ ।

६३. यमः समुपनिविषु च ३२४० ।

६४. नौ गदनदपठस्वनः ३२४१ ।

६५. क्वणो वीणायां च ३२४२ ।

६६. नित्यं पणः परिमाणे ३२४३ ।

६७. मदोऽनुपसर्गे ३२४४ ।

६८. प्रमदसंमदौ हर्षे ३२४५ ।

६९. समुदोरजः पशुषु ३२४६ ।

७०. अक्षेषु ग्लहः ३२४७ ।

७१. प्रजने सर्तेः ३२४८ ।

७२. ह्वः संप्रसारणं च न्यभ्युपविषु ३२४९

७३. आङि युद्धे ३२५० ।

७४. निपानमाहावः ३२५१ ।
७५. भावेऽनुपसर्गस्य ३२५२ ।
७६. हनश्च वधः ३२५३ ।
७७. मूर्तौ घनः ३२५४ ।
७८. अन्तर्घनो देशे ३२५५ ।
७९. अगारैकदेशे प्रघणः प्रघाणश्च ३२५६
८०. उद्घनोऽत्याधानम् ३२५७ ॥ ४ ॥
८१. अपघनोऽङ्गम् ३२५८ ।
८२. करणेऽयोविद्रुषु ३२५९ ।
८३. स्तम्बे क च ३२६० ।
८४. परौ घः ३२६१ ।
८५. उपघ्न आश्रये ३२६३ ।
८६. सङ्घोद्घौ गणप्रशंसयोः ३२६४ ।
८७. निघो निमितम् ३२६५ ।
८८. ड्वितः क्त्रिः ३२६६ ।
८९. ट्वितोऽथुच् ३२६७ ।
९०. यजयाचयतविच्छप्रच्छरक्षो नङ् ३२६८
९१. स्वपो नन् ३२६९ ।
९२. उपसर्गे घोः किः ३२७० ।
९३. कर्मण्यधिकरणे च ३२७१ ।
९४. स्त्रियां क्तिन् ३२७२ ।
* निष्ठायां सेट इति वक्तव्यम् ।
९५. स्थागापापचो भावे ३२७३ ।
* श्रुयजीषिस्तुभ्यः करणे ।
* ग्लाम्लाज्याहाभ्यो निः ।
९६. मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ३४२० ।
९७. ऊतियूतिजूतिसातिहेतिकीर्तयश्च ३२७४

९८. व्रजयजोर्भावे क्यप् ३२७५ ।

९९. संज्ञायां समजनिषदनिपतमनविद-षुञ्शीङ्भृञिणः ३२७६ ।

१००. कृञः श च ३२७७ ॥ ५ ॥

१०१. इच्छा ३२७८ ।

* परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम् ।

* जागर्तेरकारो वा ।

१०२. अ प्रत्ययात् ३२७९ ।

१०३. गुरोश्च हलः ३२८० ।

* निष्ठायां सेट इति वक्तव्यम् ।

१०४. षिद्भिदादिभ्योऽङ् ३२८१ ।

४२. ('भिदा विदारणे' २९) ('छिदा द्वैधीकरणे' ३०) विदा । क्षिपा । ('गुहा गिर्योषध्योः' ३१) श्रद्धा । मेधा गोधा । ('आरा शस्त्र्याम्' ३२) हारा । ('कारा बन्धने' ३३) क्षिया । ('तारा ज्योतिषि' ३४) ('धारा प्रपातने' ३५) रेखा चूडा पीडा वपा वसा मृजा । ('क्रपेः संप्रसारणं च' ३६) । कृपा । इति भिदादिः ॥

* क्रपेः संप्रसारणं च ।

१०५. चिन्तिपूजिकथिकुम्बिचर्चश्च ३२८२ ।

१०६. आतश्चोपसर्गे ३२८३ ।

१०७. ण्यासश्रन्थो युच् ३२८४ ।

* घट्टिवन्दिविदिभ्यश्चेति वाच्यम् ।

* इषेरनिच्छार्थस्य ।

* परेर्वा ।

१०८. रोगाख्यायां ण्वुल्बहुलम् ३२८५ ।

* धात्वर्थनिर्देशे ण्वुल् ।

* इक्श्तिपौ धातुनिर्देशे ।

* वर्णात्कारः ।

* रादिफः ।

१. एवं सर्वत्र धनुराकारान्तर्गतानि वार्तिकेष्वागतान्यपि गणसूत्रवत् गणे पठितानि भवन्ति ।

* मत्वर्थाच्छः ।
* इणजादिभ्यः ।
* इञ् वपादिभ्यः ।
* इक्कृष्यादिभ्यः ।
* संपदादिभ्यः क्विप् ।

४३. (वा २२३३)। संपद् विपद् आपद् प्रतिपद् परिषद्—एते संपदादयः ॥

१०९. संज्ञायाम् ३२८६ ।
११०. विभाषाख्यानपरिप्रश्नयोरिञ्च ३२८७
१११. पर्यायार्हर्णोत्पत्तिषु ण्वुच् ३२८८ ।
११२. आक्रोशे नञ्यनिः ३२८९ ।
११३. कृत्यल्युटो बहुलम् २८४१ ।
११४. नपुंसके भावे क्तः ३०९० ।
११५. ल्युट् च ३२९० ।
११६. कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् ३२९१ ।
११७. करणाधिकरणयोश्च ३२९३ ।
११८. पुंसि संज्ञायां घः प्रायेण ३२९६ ।
११९. गोचरसंचरवहव्रजव्यजापणनिगमाश्च ३२९८ ।
१२०. अवे तॄस्त्रोर्घञ् ३२९९　॥ ६ ॥
१२१. हलश्च ३३०० ।

* घञ्विधाववहाराधारावायानामुपसंख्यानम् ।

१२२. अध्यायन्यायोद्यावसंहाराश्च ३३०१ ।
१२३. उदङ्कोऽनुदके ३३०२ ।
१२४. जालमानायः ३३०३ ।
१२५. खनो घ च ३३०४।

* खनेर्डडरेकेकवका वाच्याः ।

१२६. ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३३०५ ।

१२७. कर्तृकर्मणोश्च भूकृञोः ३३०८ ।

* कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम् ।

१२८. आतो युच् ३३०९ ।

१२९. छन्दसि गत्यर्थेभ्यः ३४२१ ।

१३०. अन्येभ्योऽपि दृश्यते ३४२२ ।

* भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः ।

१३१. वर्तमानसामीप्ये वर्तमानवद्वा २७८९

१३२. आशंसायां भूतवच्च २७९० ।

१३३. क्षिप्रवचने लृट् २७९१ ।

१३४. आशंसावचने लिङ् २७९२ ।

१३५. नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः २७९३ ।

१३६. भविष्यति मर्यादावचनेऽवरस्मिन् २७९४ ।

१३७. कालविभागे चानहोरात्राणाम् २७९५

१३८. परस्मिन्विभाषा २७९६ ।

१३९. लिङ्निमित्ते लृङ् क्रियातिपत्तौ२२२९

१४०. भूते च २७९७ ॥ ७ ॥

१४१. वोताप्योः २७९८ ।

१४२. गर्हायां लडपिजात्वोः २७९९ ।

१४३. विभाषा कथमि लिङ् च २८०० ।

१४४. किंवृत्ते लिङ्लृटौ २८०१ ।

१४५. अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि २८०२

१४६. किंकिलास्त्यर्थेषु लृट् २८०३ ।

१४७. जातुयदोर्लिङ् २८०४ ।

* यदायद्योरुपसंख्यानम् ।

१४८. यच्चयत्रयोः २८०५ ।
१४९. गर्हायां च २८०६ ।
१५०. चित्रीकरणे च २८०७ ।
१५१. शेषे लृडयदौ २८०८ ।
१५२. उताप्योः समर्थयोर्लिङ् २८०९ ।
१५३. कामप्रवेदनेऽकच्चिति २८१० ।
१५४. संभावनेऽलमिति चेत्सिद्धाप्रयोगे २८११ ।
१५५. विभाषा धातौ संभावनवचनेऽयदि
१५६. हेतुहेतुमतोर्लिङ् २८१३ । [२८१२
१५७. इच्छार्थेषु लिङ्लोटौ २८१४ ।
* कामप्रवेदन इति वक्तव्यम् ।
१५८. समानकर्तृकेषु तुमुन् ३१७६ ।
१५९. लिङ् च २८१५ ।
१६०. इच्छार्थेभ्यो विभाषा वर्तमाने २८१६ ॥ ८ ॥
१६१. विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्न-प्रार्थनेषु लिङ् २२०८ ।
१६२. लोट् च २१९४ ।
१६३. प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च २८१७
१६४. लिङ् चोर्ध्वमौहूर्तिके २८१८ ।
१६५. स्मे लोट् २८१९ ।
१६६. अधीष्टे च २८२० ।
१६७. कालसमयवेलासु तुमुन् ३१७९ ।
१६८. लिङ्यदि २८२१ ।
१६९. अर्हे कृत्यतृचश्च २८२२ ।
१७०. आवश्यकाधमर्ण्ययोर्णिनिः ३३११ ।
१७१. कृत्याश्च ३३१२ ।

१७२. शकि लिङ् च २८२३ ।

१७३. आशिषि लिङ्लोटौ २१९५ ।

१७४. क्तिच्क्तौ च संज्ञायाम् ३३१३ ।

१७५. माङि लुङ् २२१९ ।

१७६. स्मोत्तरे लङ् च २२२० ॥

उणादय इङो निवासव्यधजपोरपघन इच्छा
हलश्च वोताप्योर्विधिषोडश ॥

इति पाणिनीयसूत्रपाठे तृतीयस्याध्यायस्य तृतीयः पादः।

## चतुर्थः पादः ।

१. धातुसंबन्धे प्रत्ययाः २८२४ ।

२. क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः २८२५ ।

३. समुच्चयेऽन्यतरस्याम् २८२६ ।

४. यथाविध्यनुप्रयोगः पूर्वस्मिन् २८२७ ।

५. समुच्चये सामान्यवचनस्य २८२८ ।

६. छन्दसि लुङ्लङ्लिटः ३४२३ ।

७. लिङर्थे लेट् ३४२४ ।

८. उपसंवादाशङ्कयोश्च ३४३१ ।

९. तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ३४३६ ।

१०. प्रयै रोहिष्यै अव्यथिष्यै ३४३७ ।

११. दृशे विख्ये च ३४३८ ।

१२. शकिं णमुल्कमुलौ ३४३९ ।

१३. ईश्वरे तोसुन्कसुनौ ३४४० ।

१४. कृत्यार्थे तवैकेन्केन्यत्वनः ३४४१ ।

१५. अवचक्षे च ३४४२।
१६. भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ३४४३।
१७. सृपितृदोः कसुन् ३४४४। [३३१६
१८. अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा
१९. उदीचां माङो व्यतीहारे ३३१७।
२०. परावरयोगे च ३३१९ ॥ १ ॥
२१. समानकर्तृकयोः पूर्वकाले ३३२०।
२२. आभीक्ष्ण्ये णमुल्च ३३४३।
२३. न यद्यनाकाङ्क्षे ३३४४।
२४. विभाषाऽग्रेप्रथमपूर्वेषु ३३४५।
२५. कर्मण्याक्रोशे कृञः खमुञ् ३३४६।
२६. स्वादुमि णमुल् ३३४७। [३३४८
२७. अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्
२८. यथातथयोरसूयाप्रतिवचने ३३४९।
२९. कर्मणि दृशिविदोः साकल्ये ३३५०।
३०. यावति विन्दजीवोः ३३५१।
३१. चर्मोदरयोः पूरेः ३३५२। [३३५३
३२. वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्
३३. चेले क्नोपेः ३३५४।
३४. निमूलसमूलयोः कषः ३३५५।
३५. शुष्कचूर्णरूक्षेषु पिषः ३३५६।
३६. समूलाकृतजीवेषु हन्कृञ्ग्रहः ३३५७।
३७. करणे हनः ३३५८।
३८. स्नेहने पिषः ३३५९।
३९. हस्ते वर्तिग्रहोः ३३६०।
४०. स्वे पुषः ३३६१। ॥ २ ॥
४१. अधिकरणे बन्धः ३३६२।

४२. संज्ञायाम् ३३६३ ।
४३. कर्त्रोर्जीवपुरुषयोर्नशिवहोः ३३६४ ।
४४. ऊर्ध्वे शुषिपूरोः ३३६५ ।
४५. उपमाने कर्मणि च ३३६६ ।
४६. कषादिषु यथाविध्यनुप्रयोगः ३३६७।
४७. उपदंशस्तृतीयायाम् ३३६८ ।
४८. हिंसार्थानां च समानकर्मकाणाम् ३३६९
४९. सप्तम्यां चोपपीडरुधकर्षः ३३७० ।
५०. समासत्तौ ३३७१ ।
५१. प्रमाणे च ३३७२ ।
५२. अपादाने परीप्सायाम् ३३७३ ।
५३. द्वितीयायां च ३३७४ ।
५४. स्वाङ्गेऽध्रुवे ३३७६ ।
५५. परिक्लिश्यमाने च ३३७७ ।
५६. विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ३३७८ ।
५७. अस्यतितृषोः क्रियान्तरे कालेषु ३३७९
५८. नाम्न्यादिशिग्रहोः ३३८० ।
५९. अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ३३८१ ।
६०. तिर्यच्यपवर्गे ३३८२ । ॥ ३ ॥
६१. स्वाङ्गे तस्प्रत्यये कृभ्वोः ३३८३ ।
६२. नाधार्थप्रत्यये च्व्यर्थे ३३८४ ।
६३. तूष्णीमि भुवः ३३८५ ।
६४. अन्वच्यानुलोम्ये ३३८६ ।
६५. शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ३१७७ ।
६६. पर्याप्तिवचनेष्वलमर्थेषु ३१७८ ।

६७. कर्तरि कृत् २८३२ ।

६८. भव्यगेयप्रवचनीयोपस्थानीयजन्याप्ला-व्यापात्या वा २८९४ । [२१५२

६९. लः कर्मणि च भावे चाकर्मकेभ्यः

७०. तयोरेव कृत्यक्तखलर्थाः २८३३ ।

७१. आदिकर्मणि क्तः कर्तरि च ३०५३ ।

७२. गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुह-जीर्यतिभ्यश्च ३०८६ ।

७३. दाशगोघ्नौ संप्रदाने ३१७२ ।

७४. भीमादयोऽपादाने ३१७३ ।

४४. भीम भीष्म भयानक वहचर (वह चरु) प्रस्कन्दन प्रतपन (प्रपतन) समुद्र स्रुव स्रुक् वृष्टि (दृष्टि) रक्षः संकसुक (शङ्कु सुक) मूर्ख खलति—**आकृतिगणोऽयम्** ॥ **इति भीमादिः** ॥

७५. ताभ्यामन्यत्रोणादयः ३१७४ ।

७६. क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ३०८७ ।

७७. लस्य २१५३ ।

७८. तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् २१५४ ।

७९. टित आत्मनेपदानां टेरे २२३३ ।

८०. थासः से २२३६ ॥ ४ ॥

८१. लिटस्तझयोरेशिरेच् २२४१ ।

८२. परस्मैपदानां णलतुसुस्थलथुसणल्वमाः

८३. विदो लटो वा २४६४ । [२१७३

८४. ब्रुवः पञ्चानामादित आहो ब्रुवः २४५०

८५. लोटो लङ्वत् २१९८ ।

८६. एरुः २१९६ ।

८७. सेर्ह्यपिच्च २२०१ ।
८८. वा छन्दसि ३५५२ ।
८९. मेर्निः २२०३ ।
९०. आमेतः २२५१ ।
९१. सवाभ्यां वामौ २२५२ ।
९२. आडुत्तमस्य पिच्च २२०४ ।
९३. एत ऐ २२५३ ।
९४. लेटोऽडाटौ ३४२७ ।
९५. आत ऐ ३४२९ ।
९६. वैतोऽन्यत्र ३४३० ।
९७. इतश्च लोपः परस्मैपदेषु ३४२६ ।
९८. स उत्तमस्य ३४२८ ।
९९. नित्यं ङितः २२०० ।
१००. इतश्च २२०५ ॥ ५ ॥
१०१. तस्थस्थमिपां तान्तन्तामः २१९९ ।
१०२. लिङः सीयुट् २२५५ ।
१०३. यासुट्परस्मैपदेषूदात्तो ङिच्च २२०९।
१०४. किदाशिषि २२१६ ।
१०५. झस्य रन् २२५६ ।
१०६. इटोऽत् २२५७ ।
१०७. सुट् तिथोः २२१० ।
१०८. झेर्जुस् २२१३ ।
१०९. सिजभ्यस्तविदिभ्यश्च २२२६ ।
११०. आतः २२२७ ।
१११. लङः शाकटायनस्यैव २४६३ ।
११२. द्विषश्च २४३५ ।
११३. तिङ्शित्सार्वधातुकम् २१६६ ।
११४. आर्धधातुकं शेषः २१८७ ।

११५. लिट् च २१७२ ।

११६. लिङाशिषि २२१५ ।

११७. छन्दस्युभयथा ३४३५ ।

धातुसंबन्धे समानाधिकरणे स्वाङ्गे
लिटस्तस्थस्थमिपां सप्तदश ॥

इति पाणिनीयसूत्रपाठे तृतीयस्याध्यायस्य चतुर्थः पादः अध्यायश्च ।

# ॥ अथ चतुर्थोऽध्यायः ॥

## प्रथमः पादः

१. ङ्याप्प्रातिपदिकात् १८२ ।

२. स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् १८३

३. स्त्रियाम् ४५३ ।

४. अजाद्यतष्टाप् ४५४ ।

४५. अजा एडका कोकिला चटका अश्वा मूषिका

बाला होडा पाका वत्सा मन्ता बिलाता पूर्वापिहाणा (पूर्वापहाणा) अपरापहाणा । ('संभस्त्राजिनशणपिण्डेभ्यः फलात्' ३७) ('सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्' ३८) ('शूद्रा चामहत्पूर्वा जातिः' ३९) क्रुञ्चा उष्णिहा देवविशा । ज्येष्ठा कनिष्ठा मध्यमा पुंयोगेऽपि । (मूलान्नञः' ४०) दंष्ट्रा । ('त्रिफला त्र्यनीका द्विगौ' ४१)—**एतेऽजादयः**

* शूद्रा चामहत्पूर्वा जातिः ।

५. ऋन्नेभ्यो ङीप् ३०६ ।

६. उगितश्च ४५५ ।

* धातोरुगितः प्रतिषेधः ।

* अञ्चतेश्चोपसंख्यानम् ।

७. वनो र च ४५६ ।

* वनो न हश इति वक्तव्यम् ।

* बहुलं छन्दसि ।

* बहुव्रीहौ वा ।

८. पादोऽन्यतरस्याम् ४५७ ।

९. टाबृचि ४५८ ।

१०. न षट्स्वस्रादिभ्यः ३०८ ।

४६. स्वसृ दुहितृ ननान्दृ यातृ मातृ तिसृ चतसृ इति स्वस्रादिः ॥

११. मनः ४५९ ।

१२. अनो बहुव्रीहेः ४६० ।

१३. डाबुभाभ्यामन्यतरस्याम् ४६१ ।

१४. अनुपसर्जनात् ४६९ ।

१५. टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ४७० ।

* नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ।

---

१-२-३. 'अजादिषु पाठ इदानींतनः' इति 'पाककर्ण' (४-१-६४) सूत्रे कैयटः ।

१. अनयोरत्र पाठोऽप्रामाणिकः ।

१६. यञश्च ४७१ ।

* आपत्यग्रहणं कर्तव्यम् ।

१७. प्राचां ष्फ तद्धितः ४७३ ।

* आसुरेरुपसंख्यानम् ।

१८. सर्वत्र लोहितादिकतन्तेभ्यः ४७६ ।

१९. कौरव्यमाण्डूकाभ्यां च ४७७ ।

२०. वयसि प्रथमे ४७८ । ॥ १ ॥

* वयस्यचरम इति वाच्यम् ।

२१. द्विगोः ४७९ ।

२२. अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ४८० ।

२३. काण्डान्तात्क्षेत्रे ४८१ ।

२४. पुरुषात्प्रमाणेऽन्यतरस्याम् ४८२ ।

२५. बहुव्रीहेरूधसो ङीष् ४८४ ।

२६. संख्याव्ययादेर्ङीप् ४८५ ।

२७. दामहायनान्ताच्च ४८६ ।

* वयोवाचकस्यैव हायनशब्दस्य ङीप् णत्वं चेष्यते ।

२८. अन उपधालोपिनोऽन्यतरस्याम् ४६२।

२९. नित्यं संज्ञाच्छन्दसोः ४८७ ।

३०. केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ४८८ ।

३१. रात्रेश्चाजसौ ३४४५ ।

* अजसादिष्विति वक्तव्यम् ।

३२. अन्तर्वत्पतिवतोर्नुक् ४८९ ।

* अन्तर्वत्पतिवदिति गर्भभर्तृसंयोगे ।

३३. पत्युर्नो यज्ञसंयोगे ४९० ।

३४. विभाषा सपूर्वस्य ४९१ ।

३५. नित्यं सपत्न्यादिषु ४९२ ।

४७. समान एक वीर पिण्ड श्व (शिरी) भ्रातृ भद्र पुत्र दासाच्छन्दसि ॥ इति समानादिः ॥

३६. पूतक्रतोरै च ४९३ ।

३७. वृषाकप्यग्निकुसितकुसिदानामुदात्तः

३८. मनोरौ वा ४९५ । [४९४

३९. वर्णादनुदात्तात्तोपधात्तो नः ४९६ ।

* असितपलितयोर्न ।

* छन्दसि क्नमेके ।

* पिशङ्गादुपसंख्यानम् ।

४०. अन्यतो ङीष् ४९७ ॥ २ ॥

४१. षिद्गौरादिभ्यश्च ४९८ ।

४८. गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मुकय ऋष्य [पुट तूण] द्रुण द्रोण हरिण कोकण (काकण) पटर उणक [आमल] आमलक कुवल बिम्ब बदर फर्करक (कर्कर) तर्कार शर्कार पुष्कर शिखण्ड सलद शष्कण्ड सनन्द सुषम सुषव अलिन्द गडुल षाण्डश आढक आनन्द आश्वत्थ सृपाट आखक (आपच्चिक) शष्कुल सूर्म (सूर्म) शूर्प सूच यूष (पूष) यूथ सूप मेथ वल्लक धातक सल्लक मालक मालत साल्वक वेतस वृक्ष (वृस) अतस [उभय] भृङ्ग मह मठ छेद पेश मेद श्वन् तक्षन अनडुही अनड्वाही । 'एषणः करणे' ४२ । देह देहल काकादन गवादन तेजन रजन लवण औद्गाहमानि (आद्गाहमानि) गौतम (गोतम) [पारक] अयस्थूण (अयःस्थूण) भौरिकि भौलिकि भौलिङ्गि यान मेध आलम्बि आलजि आलब्धि आलक्षि केवाल आपक आरट नट टोट नोट मूलाट शातन [पोतन] पातन पाठन (पानठ) आस्तरण अधिकरण अधिकार अग्रहायणी (आग्रहायणी) प्रत्यवरोहिणी [सेचन] 'सुमङ्गलात्संज्ञायाम्' ४३ । अण्डर सुन्दर मण्डल मन्थर मङ्गल पट पिण्ड [षण्ड] उर्द गुर्द शम सूद औड (आर्द्र) हृद (ह्रद) पाण्ड [माण्डल] भाण्ड (लोहाण्ड) कदर कन्दर कदल तरुण तलुन कल्माष बृहत् महत् (सोम) सौधर्म। 'रोहिणी नक्षत्रे' ४४ ।

'रेवती नक्षत्रे' ४५। विकल निष्कल पुष्कल। 'कटाच्छ्रोणिवचने' ४६। 'पिप्पल्यादयश्च' ४७। पिप्पली हरितकी (हरीतकी) कोशातकी शमी वरी शरी पृथिवी क्रोष्टु मातामह पितामह—इति गौरादिः ॥

४२. जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णनाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ५०० ।

* नीलादोषधौ प्राणिनि च ।

* संज्ञायां वा ।

४३. शोणात्प्राचाम् ५०१ ।

४४. वोतो गुणवचनात् ५०२ ।

* गुणवचनात् ङीबाद्युदात्तार्थम् ।

* खरुसंयोगोपधान्न ।

४५. बह्वादिभ्यश्च ५०३ ।

४९. बहु पद्धति अञ्चति अङ्कति अंहति शकटि (शकति)। 'शक्तिः शस्त्रे' ४८। शारि वारि राति राधि (शाधि) अहि कपि यष्टि मुनि। 'इतः। प्राण्यङ्गात्' ४९। 'कृदिकारादक्तिनः' ५०। 'सर्वतोऽक्तिन्नर्थादित्येके' ५१। चण्ड अराल कृपण कमल विकट विशाल विशङ्कट भरुज ध्वज। 'चन्द्रभागान्नद्याम्' ५२। (चन्द्रभागा नद्याम्)। कल्याण उदार पुराण अहन् क्रोड नख खुर शिखा बाल शफ गुद—आकृतिगणोऽयम् ॥ तेन। भग गल राग इत्यादि। इति बह्वादयः ॥

४६. नित्यं छन्दसि ३४४६ ।

४७. भुवश्च ३४४७ ।

४८. पुंयोगादाख्यायाम् ५०४ ।

* पालकान्तान्न ।

* सूर्याद्देवतायां चाप् ।

४९. इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ५०५ ।

* हिमारण्ययोर्महत्त्वे ।
* यवाद्दोषे ।
* यवनाल्लिप्याम् ।
* मातुलोपाध्याययोरानुग्वा ।
* मुद्गलाच्छन्दसि लिच्च ।
* आचार्यादणत्वं च ।
* अर्यक्षत्रियाभ्यां वा ।

५०. क्रीतात्करणपूर्वात् ५०६ ।

५१. क्तादल्पाख्यायाम् ५०७ ।

५२. बहुव्रीहेश्चान्तोदात्तात् ५०८ ।

* जातान्ताच्च ।
* पाणिगृहीती भार्यायाम् ।
* बहुलं संज्ञाच्छन्दसोः ।
* अन्तोदात्तादबहुनञ्सुकालसुखादिपूर्वात् ।
* जातिपूर्वादिति वक्तव्यम् ।

५३. अस्वाङ्गपूर्वपदाद्वा ५०९ ।

५४. स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ५१० ।

५५. नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ५११

* पुच्छाच्च ।
* कबरमणिविषशरेभ्यो नित्यम् ।
* उपमानात्पक्षाच्च पुच्छाच्च ।

५६. न क्रोडादिबह्वचः ५१२ ।

५०. क्रोड नख खुर गोखा उखा शिखा बाल शप गुद—आकृतिगणोऽयम् ॥ इति क्रोडादयः ॥

५७. सहनञ्विद्यमानपूर्वाच्च ५१३ ।

५८. नखमुखात्संज्ञायाम् ५१४ ।

५९. दीर्घजिह्वी च च्छन्दसि ३४४८ ।

६०. दिक्पूर्वपदान्ङीप् ५१५　　॥ ३ ॥

६१. वाहः ५१६ ।

६२. सख्यशिश्वीति भाषायाम् ५१७ ।

६३. जातेरस्त्रीविषयादयोपधात् ५१८ ।

* योपधप्रतिषेधे गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधः ।

६४. पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ५१९ ।

* सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्प्रतिषेधः ।

* संभस्त्राजिनशणपिण्डेभ्यः फलात् ।

* मूलान्नञः ।

* श्वेताच्च ।

६५. इतो मनुष्यजातेः ५२० ।

६६. ऊङुतः ५२१ ।

* अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम् ।

६७. बाह्वन्तात्संज्ञायाम् ५२२ ।

६८. पङ्गोश्च ५२३ ।

* श्वशुरस्योकाराकारलोपश्च ।

१. इदमप्रामाणिकम् ।

६९. ऊरूत्तरपदादौपम्ये ५२४ ।

७०. संहितशफलक्षणवामादेश्च ५२५ ।

* सहितसहाभ्यां चेति वक्तव्यम् ।

७१. कद्रुकमण्डल्वोश्छन्दसि ३४४९ ।

* गुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम् ।

७२. संज्ञायाम् ५२६ ।

७३. शार्ङ्गरवाद्यञो ङीन् ५२७ ।

५१. शार्ङ्गरव कापटव गौग्गुलव ब्राह्मण वैद गौतम कामण्डलेय ब्राह्मणकृतेय (आनिचेय) आनिधेय आशोकेय वात्स्यायन मौञ्जायन कैकस काप्य (काव्य) शैव्य एहि पर्येहि आश्मरथ्य औदपान अराल चण्डाल वतण्ड 'भोगवद्गौरिमतोः संज्ञायां घादिषु नित्यं ह्रस्वार्थम्' ५३ । 'नृनरयोर्वृद्धिश्च' ५४ । इति शार्ङ्गरवादिः ॥

७४. यङश्चाप् ५२८ ।

* षाद्यञश्चाप् वक्तव्यः ।

७५. आवट्याच्च ५२९ ।

७६. तद्धिताः ५३० ।

७७. यूनस्तिः ५३१ । [११९८

७८. अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ्गोत्रे

७९. गोत्रावयवात् ११९९ ।

८०. क्रौड्यादिभ्यश्च १२०० ॥ ४ ॥

५२. क्रौडि लाडि व्याडि आपिशलि आपक्षिति चौपयत चैटयत (वैटयत) सैकयत वैल्वयत सौधातकि 'सूत युवत्याम्' ५५ । 'भोज क्षत्रिये' ५६ । यौतकि कौटि भौरिकि भौलिकि [शाल्मलि] शालास्थलि कापिष्ठलि गौकक्ष्य—इति क्रौड्यादिः ॥

८१. दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम् १२०१ ।

८२. समर्थानां प्रथमाद्वा १०७२ ।

८३. प्राग्दीव्यतोऽण् १०७३ ।

८४. अश्वपत्यादिभ्यश्च १०७४ ।

५३. अश्वपति (ज्ञानपति) शतपति धनपति गणपति [स्थानपति यज्ञपति] राष्ट्रपति कुलपति गृहपति (पशुपति) धान्यपति धन्वपति (बन्धुपति धर्मपति) सभापति प्राणपति क्षेत्रपति—इत्यश्वपत्यादिः ॥

८५. दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः १०७७

* वाङ्मतिपितृमतां छन्दस्युपसंख्यानम् ।

* यमाच्चेति काशिकायाम् ।

* पृथिव्या ञाञौ ।

* देवाद्यञञौ ।

* बहिषष्टिलोपो यञ्च ईकक् च ।

* ईकञ् छन्दसि ।

* स्थाम्नोऽकारः ।

* लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः ।

* गोरजादिप्रसङ्गे यत् ।

८६. उत्सादिभ्योऽञ् १०७८।

५४. उत्स उदपान विकर विनद महानद महानस महाप्राण तरुण तलुन। बष्कयासे। पृथिवी (धेनु) पङ्क्ति जगती त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्म पीलकुण। 'उदस्थान देशे' ५७। पृषदंश भल्लकीय रथन्तर मध्यंदिन बृहत् महत् सत्त्वत् कुरु पञ्चाल इन्द्रावसान उष्णिह् ककुभ् सुवर्ण देव। 'ग्रीष्मादच्छन्दसि' ५८—इत्युत्सादिः॥

८७. स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् १०७९

८८. द्विगोर्लुगनपत्ये १०८०।

८९. गोत्रेऽलुगचि १०८१।

९०. यूनि लुक् १०८३।

९१. फक्फिञोरन्यतरस्याम् १०८७।

९२. तस्यापत्यम् १०८८।

९३. एको गोत्रे १०९३।

९४. गोत्राद्यून्यस्त्रियाम् १०९४।

९५. अत इञ् १०९५।

९६. बाह्वादिभ्यश्च १०९६।

५५. बाहु उपबाहु उपवाकु निवाकु शिवाकु वटाकु उपनिन्दु (उपविन्दु) वृषली वृकला चूडा बलाका मूषिका कुशला भगला (छगला) ध्रुवका [धुवका] सुमित्रा दुर्मित्रा पुष्करसद् अनुहरत् देवशर्मन् अग्निशर्मन् [भद्रशर्मन् सुशर्मन्] कुनामन् (सुनामन्) पञ्चन् सप्तन् अष्टन्। 'अमितौजसः सलोपश्च' ५९। सुधावत् उदञ्चु शिरस् माष शराविन् मरीची क्षेमवृद्धिन् शृङ्खलतोदिन् खरनादिन् नगरमर्दिन् प्राकारमर्दिन् लोमन् अजीगर्त कृष्ण युधिष्ठिर अर्जुन साम्ब गद प्रद्युम्न राम [उदङ्क]। 'उदकः संज्ञायाम्' ६०। 'संभूयोऽम्भसोः सलोपश्च' ६१—आकृतिगणोऽयम्॥ तेन। सात्वकिः जाङ्घिः ऐन्द्रशर्मिः आजधेनविः इत्यादि। इति बाह्वादयः॥

९७. सुधातुरकङ् च १०९७।

* व्यासवरुडनिषादचण्डालबिम्बानां चेति वक्तव्यम्।

९८. गोत्रे कुञ्जादिभ्यश्च्फञ् १०९९ ।

५६. कुञ्ज ब्रध्न शङ्ख भस्मन् गण लोमन् शठ शाक शुण्डा शुभ विपाश् स्कन्द स्कम्भ--इति कुञ्जादिः॥

९९. नडादिभ्यः फक् ११०१ ।

५७. नड चर (वर) बक मुञ्ज इतिक इतिश उपक (एक) लमक । 'शलङ्कु शलङ्कं च' ६२ । सप्तल वाजप्य तिक । 'अग्निशर्मन्वृषगणे' ६३ । प्राण नर सायक दाम मित्र द्वीप पिङ्गर पिङ्गल किङ्कर किङ्कल (कातर) कातल काश्यप (कुश्यप) काश्य काल्य (काव्य) अज अमुष्य (अमुष्म)। कृष्णरणौ ब्राह्मणवासिष्ठे' ६४ । अमित्र लिगु चित्र कुमार । 'क्रोष्टु कोष्टं च' ६५ । लोह दुर्ग स्तम्भ शिंशपा अग्र तृण शकट सुमनस् सुमत मिमत ऋच् जलंधर अध्वर युगंधर हंसक दण्डिन् हस्तिन् [पिण्ड] पञ्चाल चमसिन् सुकृत्य स्थिरक ब्राह्मण चटक बदर अश्वल खरप लङ्क इन्ध अस्र कामुक ब्रह्मदत्त उदुम्बर शोण अलोह दण्डप – इति नडादिः॥

१००. हरितादिभ्योऽञः ११०२ ॥ ५ ॥

१०१. यञिञोश्च ११०३ । [११०४

१०२. शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु

१०३. द्रोणपर्वतजीवन्तादन्यतरस्याम्११०५

१०४. अनृष्यानन्तर्ये बिदादिभ्योऽञ्११०६

५८. बिद उर्व कश्यप कुशिक भरद्वाज उपमन्यु किलात कन्दर्प (किंदर्भ) विश्वानर ऋषिषेण (ऋष्टिषेण) ऋतभाग हर्यश्व प्रियक आपस्तम्ब कूचवार शरद्वत् शुनक ( शुनक् ) धेनु गोपवन शिग्रु बिन्दु [भोगक] भाजन [शमिक] अश्वावतान श्यामाक श्यामक [श्यावलि] श्यापर्ण हरित किंदास बह्यस्क अर्कजूष (अर्कलूष) बध्योग विष्णु वृद्ध प्रतिबोध रचित रथीतर (रथन्तर) गविष्ठिर निषाद [शबर अलम] मठर (मृडाकु) सृपाकु मृदु पुनर्भू पुत्र दुहितृ ननान्द । 'परस्त्री परशुं च' ६६ । इति बिदादिः॥

१०५. गर्गादिभ्यो यञ् ११०७ ।

५९. गर्ग वत्स । 'वाजासे' ६७ । संकृति अज व्याघ्रपात् विदभृत् प्राचीनयोग [अगस्ति] पुलस्ति चमस रेभ अग्निवेश शङ्ख शट शक एक धूम अवट मनस धनञ्जय वृक्ष विश्वावसु जरमाण लोहित शंसित बभ्रु वल्गु मण्डु गण्डु शङ्कु लिगु गुहलु मन्तु मङ्क्षु अलिगु जिगीषु मनु तन्तु मनायी सूनु कथक कन्थक ऋक्ष तृक्ष (वृक्ष) [तनु] तरुक्ष तलुक्ष तण्ड वतण्ड कपिकत (कपि कत) कुरुकत अनडुह् कण्व शकल गोकक्ष अगस्त्य कण्डिनी यज्ञवल्क पर्णवल्क अभयजात विरोहित वृषगण रहूगण शण्डिल वर्णक (चणक) चुलुक मुद्गल मुसल जमदग्नि पराशर जतूकर्ण (जातूकर्ण) महित मन्त्रित अश्मरथ शर्कराक्ष पूतिमाष स्थूरा अदरक (अररक) एलाक पिङ्गल कृष्ण (लो) गोलन्द उलूक तितिक्ष भिषज (भिषज्) [भिष्णज] भडित भण्डित दल्भ चेकित चिकित्सित देवहू इन्द्रहू एकलू पिप्पलू बृहदग्नि [सुलोहिन्] सुलाभिन् उक्थ कुटीगु—इति गर्गादिः ॥

१०६. मधुबभ्र्वोर्ब्राह्मणकौशिकयोः ११०९ ।

१०७. कपिबोधादाङ्गिरसे १११० ।

१०८. वतण्डाच्च ११११ ।

१०९. लुक्स्त्रियाम् १११२ ।

११०. अश्वादिभ्यः फञ् १११३ ।

६०. अश्व अश्मन् शङ्ख शूद्रक विद पुट रोहिण खर्जूर (खजूर) [खञ्जार वस्त] पिजूल भडिल भण्डिल भडित भण्डित [प्रकृत रामोद] क्षान्त [काश तीक्ष्ण गोलाङ्क अर्क स्वर स्फुट चक्र श्रविष्ठ] पविन्द पवित्र गोमिन श्याम धूम । धूम्र वाग्मिन् विश्वानर कुट । 'शप आत्रेये' ६८ । जन जड खड ग्रीष्म अर्ह कित विशम्प विशाल गिरि चपल चुप दासक वैल्व (बैल्य) प्राच्य [धर्म्य] आनडुह्य । 'पुंसि जाते' ६९ । अर्जुन [प्रहृत] सुमनस् दुर्मनस् मन (मनस्) (प्रान्त) ध्वन । 'आत्रेय भरद्वाजे' ७० । 'भरद्वाज आत्रेये' ७१ । उत्स आतव कितव [वद धन्य पाद] शिव खदिर—इत्यश्वादिः ॥

१११. भर्गात्त्रैगर्ते ११११४ ।

११२. शिवादिभ्योऽण् ११११५ ।

६१. शिव प्रोष्ठ प्रोष्ठिक चण्ड जम्भ भूरि दण्ड कुठार ककुभ् (ककुभा) अनभिम्लान कोहित सुख सन्धि मुनि ककुत्स्थ कहोड कोहड कहूय कहय रोध कपिञ्जल (कुपिञ्जल) खञ्जन वतण्ड तृणकर्ण क्षीरह्रद जलह्रद परिल [पथिक] पिष्ट हैहय (पार्षिका) गोपिका कपिलिका जटिलिका बधिरिका मञ्जीरक (मजिरक) वृष्णिक खञ्जार खञ्जाल (कर्मार) रेख लेख आलेखन विश्रवण रवण वर्तनाक्ष ग्रीवाक्ष (विटप पिटक) पिटाक तृक्षाक नभाक ऊर्णनाभ जरत्कारु (पृथा उत्क्षेप) पुरोहितिका सुरोहितिका सुरोहिका आर्यश्वेत (अर्यश्वेत) सुपिष्ट मसुरकर्ण मयूरकर्ण (खर्जुरकर्ण) कदूरक तक्षन् ऋष्टिषेण गङ्गा विपाश यस्क लह्य द्रुह्य अयःस्थूण तृणकर्ण (तृण कर्ण) पर्ण भलन्दन विरूपाक्ष भूमि इला सपत्नी । 'द्व्यचो नद्याः' ७२ । 'त्रिवेणी त्रिवणं च' ७३ । इति शिवादिः ॥ आकृतिगणः ॥

११३. अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ११११६ ।

११४. ऋष्यन्धकवृष्णिकुरुभ्यश्च ११११७ ।

११५. मातुरुत्संख्यासंभद्रपूर्वायाः ११११८ ।

११६. कन्यायाः कनीन च ११११९ ।

११७. विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु [११२०

११८. पीलाया वा ११२१ ।

११९. ढक्च मण्डूकात् ११२२ ।

१२०. स्त्रीभ्यो ढक् ११२३　　॥ ६ ॥

१२१. द्व्यचः ११२४ ।

१२२. इतश्चानिञः ११२५ ।

१२३. शुभ्रादिभ्यश्च ११२६ ।

६२. शुभ्र विष्ट पुर (विष्टपुर) ब्रह्मकृत शतद्वार शलाथल शलाकाभ्रू लेखाभ्रू (लेखाभ्र) विकसा (विकास)

रोहिणी रुक्मिणी धर्मिणी दिश् शालूक अजबस्ति शकंधि विमातृ विधवा शुक विश देवतर शकुनि शुक्र उग्र ज्ञातल (शतल) बन्धकी सृकण्डु विस्ति अतिथि गोदन्त कुशाम्ब मकष्टु शाताहर पवष्टुरिक सुनामन। 'लक्ष्मण-श्यामयोर्वासिष्ठे' ७४। गोधा कृकलास अणीव प्रवाहण भरत (भारत) भरम मृकण्डु कर्पूर इतर अन्यतर आलीढ सुदन्त सुदक्ष सुवक्षस् सुदामन् कद्रु तुद अकशाय कुमारिका कुठारिका किशोरिका अम्बिका जिह्माशिन् परिधि वायुदत्त शकल शलाका खडूर कुबेरिका अशोका गन्धपिङ्गला खडोन्मत्ता अनुदृष्टिन् (अनुदृष्टि) जरतिन बलीवर्दिन् विप्र बीज जीव श्वन् अश्मन् अश्व अजिर॥ **इति शुभ्रादिः॥ आकृतिगणः॥**

**१२४. विकर्णकुषीतकात्काश्यपे ११२७।**

**१२५. भ्रुवो वुक्च ११२८।**

**१२६. कल्याण्यादीनामिनङ् च ११३१।**

६३. कल्याणी सुभगा दुर्भगा बन्धकी अनुदृष्टि अनुसृति (अनुसृष्टि) जरती बलीवर्दी ज्येष्ठा कनिष्ठा मध्यमा परस्त्री—**इति कल्याण्यादिः॥**

**१२७. कुलटाया वा ११३२।**

**१२८. चटकाया ऐरक् ११३४।**

चटकस्येति वाच्यम्।

* स्त्रियामपत्ये लुक्

**१२९. गोधाया ढ्रक् ११३५।**

**१३०. आरगुदीचाम् ११३६।**

**१३१. क्षुद्राभ्यो वा ११३७।**

**१३२. पितृष्वसुश्छण् ११३८।**

**१३३. ढकि लोपः ११३९।**

**१३४. मातृष्वसुश्च ११४०।**

**१३५. चतुष्पाद्भ्यो ढञ् ११४१।**

**१३६. गृष्ट्यादिभ्यश्च ११४२।**

६४. गृष्टि हृष्टि बलि हलि विश्रि कुद्रि अजवस्ति मित्रयु—**इति गृष्ट्यादिः** ॥

**१३७. राजश्वशुराद्यत् ११५३ ।**

* **राज्ञो जातावेवेति वाच्यम् ।**

**१३८. क्षत्राद्घः ११६१ ।**

**१३९. कुलात्खः ११६२ । [११६३ ॥७**

**१४०. अपूर्वपदादन्यतरस्यां यड्ढकञौ**

**१४१. महाकुलादञ्खञौ ११६४ ।**

**१४२. दुष्कुलाड्ढक् ११६५ ।**

**१४३. स्वसुश्छः ११६६ ।**

**१४४. भ्रातुर्व्यच्च ११६७ ।**

**१४५. व्यन्सपत्ने ११६८ ।**

**१४६. रेवत्यादिभ्यष्ठक् ११६९ ।**

६५. रेवती अश्वपाली मणिपाली द्वारपाली वृकवञ्चिन् वृकबन्धु वृकग्राह कर्णग्राह दण्डग्राह कुक्कुटाक्ष (ककुदाक्ष) [चामरग्राह] - **इति रेवत्यादिः** ॥

**१४७. गोत्रस्त्रियाः कुत्सने ण च ११७१ ।**

**१४८. वृद्धाट्ठक्सौवीरेषु बहुलम् ११७२ ।**

**१४९. फेश्छ च ११७३ ।**

**१५०. फाण्टाहृतिमिमताभ्यां णफिञौ ११७४**

**१५१. कुर्वादिभ्यो ण्यः ११७५ ।**

६६. कुरु गर्गर मङ्गुष अजमार रथकार वावदूक। 'सम्राज क्षत्रिये' ७५। कवि मति (विमति) कापिञ्जलादि वाक् वामरथ पितृमत् इन्द्रजाली [इन्द्रलाजी] एजि वातकि दामोष्णीषि गणकारि कैशोरि कुट शालाका (शलाका) मुर पुर एरका शुभ्र अभ्र दर्भ केशिनी । 'वेनाच्छन्दसि' ७६ । शूर्पणाय श्यावनाय श्यावरथ शावपुत्र सत्यंकार वडभीकार पथिकार मूढ शकन्धु शङ्कु शाक शाल्मिन् शालीन कर्तृ हर्तृ इन पिण्डी तक्षन् । वामरथस्य कण्वादिवत्स्वरवर्जम् ॥ **इति कुर्वादिः** ॥

१५२. सेनान्तलक्षणकारिभ्यश्च ११७६ ।

१५३. उदीचामिञ् ११७७ ।

* तक्ष्णोऽण उपसंख्यानम् ।

१५४. तिकादिभ्यः फिञ् ११७८ ।

६७. तिक कितक (कितव) संज्ञाबालशिख (संज्ञा बाला शिखा) उरश (उरस्) शाट्य सैन्धव यमुन्द रूप्य ग्राम्य नील अमित्र गौकुक्ष्य [गौकक्ष्य] कुरु देवरथ तैतल औरश (औरस) कौरव्य भौरिकि भौलिकि चौपयत चैटयत शीकयत क्षैतयत वाजवत चन्द्रमस शुभ गङ्गा वरेण्य सुपामन् आरट्व [आरब्ध] वह्यका खल्या [खल्यका] वृष लोमक उदन्य यज्ञ ॥ इति तिकादिः॥

१५५. कौसल्यकार्मार्याभ्यां च ११७९ ।

* वदगुकोसलकर्मारछागवृषाणां युक्चादिष्टस्य ।

१५६. अणो द्व्यचः ११८० ।

१५७. उदीचां वृद्धादगोत्रात् ११८१ ।

१५८. वाकिनादीनां कुक्च ११८२ ।

६८. वाकिन गौधेर कार्कष काक लङ्का । 'चर्मिवर्मिणोर्नलोपश्च' ७७ । इति वाकिनादिः ॥

१५९. पुत्रान्तादन्यतरस्याम् ११८३ ।

१६०. प्राचामवृद्धात्फिन्बहुलम् ११८४ ।८।

१६१. मनोर्जातावञ्यतौ षुक्च ११८५ ।

१६२. अपत्यं पौत्रप्रभृति गोत्रम् १०८९ ।

* यूनश्च कुत्सायां गोत्रसंज्ञेति वाच्यम् ।

१६३. जीवति तु वंश्ये युवा १०९० ।

* वृद्धस्य च पूजायाम् ।

१६४. भ्रातरि च ज्यायसि १०९१ ।

१६५. वाऽन्यस्मिन्सपिण्डे स्थविरतरे जीवति १०९२ ।

१६६. जनपदशब्दात्क्षत्रियादञ् ११८६ ।

* क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् ।

* पूरोरण् वक्तव्यः ।

* पाण्डोर्ड्यण् ।

१६७. साल्वेयगान्धारिभ्यां च ११८७ ।

१६८. द्व्यञ्मगधकलिङ्गसूरमसादण् ११८८

१६९. वृद्धेत्कोसलाजादाञ्ञ्यङ् ११८९ ।

१७०. कुरुनादिभ्यो ण्यः ११९० ।

१७१. साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् [११९१

१७२. ते तद्राजाः ११९२ ।

१७३. कम्बोजाल्लुक् ११९४ ।

* कम्बोजादिभ्य इति वक्तव्यम् ।

६९. कम्बोज चोल केरल शक यवन ॥ इति कम्बोजादिः ॥

१७४. स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ११९५

१७५. अतश्च ११९६ ।

१७६. न प्राच्यभर्गादियौधेयादिभ्यः ११९७

७०. भर्ग करूश केकय कश्मीर साल्व सुस्थाल उरश (उरस्) कौरव्य ॥ इति भर्गादिः ॥

७१. यौधेय शौक्रेय शौभ्रेय ज्यावाणेय धार्तेय (धौर्तेय) त्रिगर्त भरत उशीनर ॥ इति यौधेयादिः ॥

ङ्याब्द्विगोः षिद्गौरादिवाहो दैवयज्ञियञि-ञोर्घ्यचो महाकुलान्मनोर्जातौ षोडश ॥

इति पाणिनीयसूत्रपाठे चतुर्थस्याध्यायस्य प्रथमः पादः ।

## द्वितीयः पादः ।

१. तेन रक्तं रागात् १२०२ ।

२. लाक्षारोचनाट्ठक् १२०३ ।

* शकलकर्दमाभ्यामुपसंख्यानम् ।
* (शकलकर्दमाभ्यामणपीति काशिका ।)
* नील्या अन्वक्तव्यः ।
* पीतात्कन्वक्तव्यः ।
* हरिद्रामहारजनाभ्यामञ् ।

३. नक्षत्रेण युक्तः कालः १२०४ ।
४. लुबविशेषे १२०५ ।
५. संज्ञायां श्रवणाश्वत्थाभ्याम् १२०६ ।
६. द्वन्द्वाच्छः १२०७ ।
७. दृष्टं साम १२०८ ।
८. कलेर्ढक् १२०९ (वा २६८९ ।)

* सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः ।
* अस्मिन्नर्थेऽण् डिद्वा वक्तव्यः ।
* जातार्थे प्रतिप्रसूतोऽण्वा डिद्वक्तव्यः ।
* तीयादीकक् स्वार्थे वाच्यः ।
* न विद्यायाः ।
* गोत्रादङ्कवत् ।

९. वामदेवाड्ड्यड्ड्यौ १२१० ।
१०. परिवृतो रथः १२११ ।
११. पाण्डुकम्बलादिनिः १२१२ ।
१२. द्वैपवैयाघ्रादञ् १२१३ ।
१३. कौमारापूर्ववचने १२१४ ।
१४. तत्रोद्धृतममत्रेभ्यः १२१५ ।
१५. स्थण्डिलाच्छयितरि व्रते १२१६ ।
१६. संस्कृतं भक्षाः १२१७ ।
१७. शूलोखाद्यत् १२१८ ।
१८. दध्नष्ठक् १२१९ ।
१९. उदश्वितोऽन्यतरस्याम् १२२० ।
२०. क्षीराड्ढञ् १२२२ ॥ १ ॥
२१. साऽस्मिन्पौर्णमासीति १२२३ ।

२२. आग्रहायण्यश्वत्थाट्ठक् १२२४ ।
२३. विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः [१२२५
२४. साऽस्य देवता १२२६ ।
२५. कस्येत् १२२७ ।
२६. शुक्राद्घन् १२२८ ।
२७. अपोनप्त्रपांनप्तृभ्यां घः १२२९ ।
२८. छ च १२३० ।
* छप्रकरणे पैङ्गाक्षिपुत्रादिभ्य उपसंख्यानम् ।
* शतरुद्राद्घ च ।
२९. महेन्द्राद्घाणौ च १२३१ ।
३०. सोमाट्ट्यण् १२३२ ।
३१. वाय्वृतुपित्रुषसो यत् १२३३ ।
३२. द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च १२३५ ।
३३. अग्नेर्ढक् १२३६ ।
३४. कालेभ्यो भववत् १२३७ ।
३५. महाराजप्रोष्ठपदाट्ठञ् १२३८ ।
* तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसंख्यानम् ।
* पूर्णमासादण्वक्तव्यः ।
३६. पितृव्यमातुलमातामहपितामहाः१२४२
* पितुर्भ्रातरि व्यत् ।
* मातुर्डुलच् ।
* मातृपितृभ्यां पितरि डामहच् ।
* मातरि षिच्च ।
* अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः ।
* तिलान्निष्फलात्पिञ्जपेजौ ।
* पिञ्जश्छन्दसि डिच्च ।
३७. तस्य समूहः १२४३ ।
३८. भिक्षादिभ्योऽण् १२४४ ।

७२. भिक्षा गर्भिणी क्षेत्र करीष अङ्गार (अङ्गार) चर्मिन् (चर्मन्) धर्मिन् सहस्र युवति पदाति पद्धति अथर्वन् दक्षिणा (भूत विषय श्रोत्र)॥ **इति भिक्षादिः।**

**३९. गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्स-मनुष्याजाद्वुञ् १२४६ ।**

*** वृद्धाच्चेति वक्तव्यम् ।**

**४०. केदाराद्यञ्च १२४८ ॥ २ ॥**

*** गणिकाया यञिति वक्तव्यम् ।**

**४१. ठञ्कवचिनश्च १२४९ ।**

**४२. ब्राह्मणमाणववाडवाद्यन् १२५० ।**

*** पृष्ठादुपसंख्यानम् ।**

*** वातादूलो वा ।**

**४३. ग्रामजनबन्धुभ्यस्तल् १२५१ ।**

*** गजसहायाभ्यां चेति वक्तव्यम् ।**

*** अह्नः खः क्रतौ ।**

*** पर्श्वा णस् वक्तव्यः ।**

**४४. अनुदात्तादेरञ् १२५३ ।**

**४५. खण्डिकादिभ्यश्च १२५४ ।**

७३. खण्डिक वडवा । 'क्षुद्रकमालवात् (क्षुद्रक-मालवात्) सेना संज्ञायाम्' ७८ । भिक्षुक शुक उलूक श्वन् अहन् युगवरत्रा (युगवरत्र) हलबन्धा (हलबन्ध) **इति खण्डिकादिः॥**

**४६. चरणेभ्यो धर्मवत् १२५५ ।**

**४७. अचित्तहस्तिधेनोष्ठक् १२५६ ।**

*** धेनोरनञ इति वक्तव्यम् ।**

**४८. केशाश्वाभ्यां यञ्छावन्यतरस्याम् १२५७**

**४९. पाशादिभ्यो यः १२५८ ।**

७४. पाश तृण धूम वात अङ्गार (पाटल) पोत गल पिटक पिटाक शकट हल [नट] वन ॥ **इति पाशादिः॥**

**५०. खलगोरथात् १२५९ ।**

**५१. इनित्रकट्यचश्च १२६० ।**

*** खलादिभ्य इनिः ।**

७५. **(वा २७३८)** । खलिनी डूकिनी (डाकिनी) कुटुम्बिनी (कुटुम्बिनी) द्रुमिणी अङ्किनी गविनी रथिनी कुण्डलिनी ॥ **इति खलादिः ॥**

**५२. विषयो देशे १२६१ ।**

**५३. राजन्यादिभ्यो वुञ् १२६२ ।**

७६. राजन्य आनृत बाभ्रव्य शालङ्कायन दैवयातव (दैवयात) (अव्रीड वरत्रा) जालंधरायण (राजायन) तेलु आत्मकामेय अम्बरीषपुत्र वसाति बैल्ववन शैलूष उदुम्बर तीव्र बैल्वज आर्जुनायन संप्रिय दाक्षि ऊर्णनाभ ॥ **इति राजन्यादिः ॥ आकृतिगणः ॥**

**५४. भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ १२६३ ।**

७७. भौरिकी भौलिकी चौपयत चौटयत (चेटयत) काणेय वाणिजक वाणिकाज्य (वालिकाज्य) सैकयत वैकयत ॥ **इति भौरिक्यादिः ॥**

७८. ऐषुकारि सारस्यायन (सारसायन) चान्द्रायण द्व्याक्षायण त्र्याक्षायण औडायन जौलायन खाडायन दासमित्रि दासमित्रायण शौद्रायण दाक्षायण शापण्डायन (शायण्डायन) तार्क्ष्यायण शौभ्रायण सौवीर (सौवीरायण) शपण्ड (शयण्ड) शौण्ड शयाण्डि (शयान्ड) वैश्वमानव वैश्वधेनव (वैश्वधेनव) नड तुण्डदेव विश्वदेव (सापिण्डि) **इत्यैषुकार्यादिः ॥**

**५५. सोऽस्यादिरिति छन्दसः प्रगाथेषु १२६४**

*** स्वार्थ उपसंख्यानम् ।**

**५६. संग्रामे प्रयोजनयोद्धृभ्यः १२६५ ।**

**५७. तदस्यां प्रहरणमिति क्रीडायां णः १२६६**

**५८. घञः साऽस्यां क्रियेति ञः १२६७ ।**

**५९. तदधीते तद्वेद १२६९ ।**

**६०. क्रतूक्थादिसूत्रान्ताट्ठक् १२७० ।**

७९. उक्थ लोकायत न्याय न्यास पुनरुक्त निरुक्त निमित्त द्विपदा ज्योतिष अनुपद अनुकल्प यज्ञ (धर्म) चर्चा क्रमेतर श्लक्ष (श्लक्ष्ण) संहिता पदक्रम संघट सङ्घट्ट वृत्ति परिषद् संग्रह गण (गुण) आयुर्देव (आयुर्वेद)॥ इत्युक्थादिः॥

* मुख्यार्थात्तूक्थशब्दाद्गणौ नेष्येते।

* विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्।

* सूत्रान्तात्त्वकल्पादेरेवेष्यते।

* अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्ताच्चेति वक्तव्यम्।

* आख्यानाख्यायिकेतिहासपुराणेभ्यश्च।

* सर्वादेः सादेश्च लुक्।

* द्विगोश्च।

* अनुसूर्लक्ष्यलक्षणे।

* इकन्पदोत्तरपदात्।

* शतषष्टेष्षिकन् पथः।

६१. क्रमादिभ्यो वुन् १२७१।

८०. क्रम पद शिक्षा मीमांसा सामन्—इति क्रमादिः॥

६२. अनुब्राह्मणादिनिः १२७२।

६३. वसन्तादिभ्यष्ठक् १२७३।

८१. वसन्त (ग्रीष्म) वर्षा शरद (शरत्) हेमन्त शिशिर प्रथम गुण चरम अनुगुण अथर्वन् आथर्वण॥ इति वसन्तादिः॥

६४. प्रोक्ताल्लुक् १२७४।

६५. सूत्राच्च कोपधात् १२७७।

६६. छन्दोब्राह्मणानि च तद्विषयाणि १२७८

६७. तदस्मिन्नस्तीति देशे तन्नाम्नि १२७९।

६८. तेन निर्वृत्तम् १२८०।

६९. तस्य निवासः १२८१।

७०. अदूरभवश्च १२८२।

७१. ओरञ् १२८३।

७२. मतोश्च बह्वजङ्गात् १२८४ ।

७३. बह्वचः कूपेषु १२८५ ।

७४. उदक्च विपाशः १२८६ ।

७५. संकलादिभ्यश्च १२८७ ।

८२. सङ्कल पुष्कल उत्तम उडुप उद्वेप उत्पुट कुम्भ निधान सुदक्ष सुदत्त सुभूत सुपूत सुनेत्र सुमङ्गल सुपिङ्गल सूत सिकत पूतिका (पूतिक) पूलास कूलास पलाश निवेश गवेश (गवेष) गम्भीर इतर आन् अहन् लोमन् वेमन् चरण (वरुण) बहुल सद्योज अभिषिक्त गोभृत् राजभृत् भल्ल मल्ल माल ॥ इति सङ्कलादिः ॥

७६. स्त्रीषु सौवीरसाल्वप्राक्षु १२८८ ।

७७. सुवास्त्वादिभ्योऽण् १२८९ ।

८३. सुवास्तु (सुवस्तु) वर्णु भण्डु खण्डु सेवालिन् कर्पूरिन् शिखण्डिन् गर्त कर्कश शकटीकर्ण कृष्णकर्ण (कर्क) कर्कन्धुमती गोह अहिसक्थ ॥ इति सुवास्त्वादिः ॥

७८. रोणी १२९० ।

७९. कोपधाच्च १२९१ ।

८०. वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः १२९२ ॥ ४ ॥

८४. अरीहण (अहीरण) द्रुगण द्रुहण भलग (भगल) उलन्द किरण सांपरायण क्रौष्टायन (क्रौष्ट्रायण) औष्ट्रायण त्रैगर्तायन मैत्रायण भास्त्रायण वैमतायन (वैमतायन) गौमतायन सौमतायन सौसायन धौमतायन सौमायन ऐन्द्रायण कौद्रायण (कौन्द्रायण) खाडायन शाण्डिल्यायन रायस्पोष विपथ विपाश उद्दण्ड (उदञ्चन) खाण्डवीरण वीरण काशकृत्स्न कृत्स्न (कशकृत्स्न) जाम्बवत शिंशपा रैवत (रेवत) बिल्व सुयज्ञ शिरीष बधिर

जम्बु खदिर सुशर्मन् (सशर्मन्) दलतृ भलन्दन खण्डु कलन (कनल) यज्ञदत्त—**इत्यरीहणादिः** ॥ ८५. कृशाश्व अरिष्ट अरिश्म वेश्मन् विशाल लोमश रोमश रोमक लोमक शबल कूट वर्चल सुवर्चल सुकर सूकर प्रातर (प्रतर) सदृश पुरग पुराग सुख धूम अजिन विनत अवनत कुविद्यास [विकुव्यास] पराशर अरुस् अयस् मौद्गल्याकर (मौद्गल्य युकर)—**इति कृशाश्वादिः** ॥ ८६. ऋश्य [ऋष्य] न्यग्रोध शर निलीन (निवास निवात) निधान निबन्धन (निबन्ध) (विबद्ध) परिगूढ (उपगूढ) असनि सित मत वेश्मन् उत्तराश्मन् अश्मन् स्थूल बाहु खदिर शर्करा अनडुह (अनडुह्) अरडु परिवंश वेणु वीरण खण्ड दण्ड परिवृत्त कर्दम अंशु—**इति ऋश्यादिः** ॥ ८७. कुमुद शर्करा न्यग्रोध इक्कट संकट कङ्कट गर्त बीज परिवाप निर्यास शकट कच मधु शिरीष अश्व अश्वत्थ बल्बज यवाष कूप विकङ्कत दशग्राम—**इति कुमुदादिः** ॥ ८८. काश पाश अश्वत्थ पलाश पीयूक्षा चरण वास नड वन कर्दम कच्छूल कङ्कट गुहा बिस तृण कर्पूर बर्बर मधुर ग्रह कपित्थ जतु सीपाल—**इति काशादिः** ॥ ८९. तृण नड मूल वन पर्ण वर्ण वराण बिल पुल फल अर्जुन अर्ण सुवर्ण बल चरण बुस—**इति तृणादिः** ॥ ९०. प्रेक्षा फलका (हलका) बन्धुका ध्रुवका क्षिपका न्यग्रोध इक्कट कङ्कट (संकट) कट कूप बुक पुक पुट मह परिवाप यवाष ध्रुवका गर्त कूपक हिरण्य—**इति प्रेक्षादिः** ९१. अश्मन् यूथ ऊष मीन नद दर्भ बृन्द गुद खण्ड नग शिखा कोट पाम कन्द कान्द कुल गह्व गुड कुण्डल पीन गुह—**इत्यश्मादिः** ॥ ९२. सखि अग्निदत्त वायुदत्त सखिदत्त (गोपिल) भल्लपाल (भल्ल पाल) चक्र चक्रवाक छगल अशोक करवीर वासव वीर पूर वज्र कुशीरक शीहर (सीहर) सरक सरस समर समल सुरस रोह तमाल कदल सप्तल—**इति सख्यादिः** ॥ ९३. संकाश कपिल कश्मीर (समीर) सूरसेन सरक सूर। 'सुपन्थिन्पन्थ च'। यूप (यूथ) (अंश) अङ्ग नासा पलित अनुनाश अश्मन् कूट मलिन दश कुम्भ

५. ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्

६. ऊर्णोतेर्विभाषा २४४९ । [२२९९

७. अतो हलादेर्लघोः २२८४ ।

८. नेड्वशि कृति २९८१ ।

९. तितुत्रतथसिसुसरकसेषु च ३१६३ ।

* तितुत्रेष्वग्रहादीनामिति वक्तव्यम् ।

१०. एकाच उपदेशेऽनुदात्तात् २२४६ ।

११. श्र्युकः किति २३८१ ।

१२. सनि ग्रहगुहोश्च २६१० ।

१३. कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि २२९३ ।

१४. श्वीदितो निष्ठायाम् ३०३९ ।

१५. यस्य विभाषा ३०२५ ।

१६. आदितश्च ३०३६ ।

१७. विभाषा भावादिकर्मणोः ३०५४ ।

१८. क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ३०५८ ।

१९. धृषिशसी वैयात्ये ३०५९ ।

२०. दृढः स्थूलबलयोः ३०६० ॥ १ ॥

२१. प्रभौ परिवृढः ३०६१ ।

२२. कृच्छ्रगहनयोः कषः ३०६२ ।

२३. घुषिरविशब्दने ३०६३ ।

२४. अर्देः संनिविभ्यः ३०६४ ।

२५. अभेश्चाविदूर्ये ३०६५ ।

२६. णेरध्ययने वृत्तम् ३०६६ । [३०६८

२७. वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः

२८. रुष्यमत्वरसंघुषास्वनाम् ३०६९ ।

२९. हृषेर्लोमसु ३०७० ।

* विस्मितप्रतिघातयोश्च ।

३०. अपचितश्च ३०७१ ।

* क्तिनि नित्यं चिभावो वक्तव्यः ।

३१. ह्रु ह्वरेश्छन्दसि ३५७९ ।

३२. अपरिह्वृताश्च ३५८० ।

३३. सोमे ह्वरितः ३५८१ ।

३४. ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरुत्रीरुज्ज्वलितिक्षरितिवमित्यमितीति च ३५८२ ।

३५. आर्धधातुकस्येड्वलादेः २१८४ ।

३६. स्नुक्रमोरनात्मनेपदनिमित्ते २३२३ ।

३७. ग्रहोऽलिटि दीर्घः २५६२ ।

३८. वृतो वा २३९१ ।

३९. न लिङि २५२९ ।

४०. सिचि च परस्मैपदेषु २३९२ ॥ २

४१. इट् सनि वा २६२५ ।

४२. लिङ्सिचोरात्मनेपदेषु २५२८ ।

४३. ऋतश्च संयोगादेः २५२६ ।

४४. स्वरतिसूतिसूयतिधूञूदितो वा २२७९ ।

४५. रधादिभ्यश्च २५१५ ।

४६. निरः कुषः २५६० ।

४७. इण्निष्ठायाम् ३०४५ ।

४८. तीषसहलुभरुषरिषः २३४० ।

४९. सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् २६१८ ।

* तनिपतिदरिद्रातिभ्यः सनो वा इड् वाच्यः ।

५०. क्लिशः क्त्वानिष्ठयोः ३०४९ ।

५१. पूङश्च ३०५० ।
५२. वसतिक्षुधोरिट् ३०४६ ।
५३. अञ्चेः पूजायाम् ३०४७ ।
५४. लुभो विमोहने ३०४८ ।
५५. जॄव्रश्च्योः क्त्वि ३३२७ ।
५६. उदितो वा ३३२८ ।
५७. सेऽसिचि कृतचृतच्छृदतृदनृतः २५०६
५८. गमेरिट् परस्मैपदेषु २४०१ ।
५९. न वृद्भ्यश्चतुर्भ्यः २३४८ ।
६०. तासि च क्लृपः २३५२ ॥ ३ ॥
६१. अचस्तास्वत्थल्यनिटो नित्यम् २२९४
६२. उपदेशेऽत्वतः २२९५ ।
६३. ऋतो भारद्वाजस्य २२९६ । [२५२७
६४. बभूथाततन्थजगृभ्मववर्थेति निगमे
६५. विभाषा सृजिदृशोः २४०४ ।
६६. इडत्त्यर्तिव्ययतीनाम् २३८४ ।
६७. वस्वेकाजाद्धसाम् ३०९६ ।
६८. विभाषा गमहनविदविशाम् ३०९९ ।
* दृशेश्च ।
६९. सनिंससनिवांसम् ३५८३ ।
७०. ऋद्धनोः स्ये २३६६ ।
७१. अञ्जेः सिचि २५४६ ।
७२. स्तुसुधूञ्भ्यः परस्मैपदेषु २३८५ ।
७३. यमरमनमातां सक्च २३७७ ।
७४. स्मिपूङ्रञ्ज्वशां सनि २६२६ ।
७५. किरश्च पञ्चभ्यः २६११ ।
७६. रुदादिभ्यः सार्वधातुके २४७४ ।
७७. ईशः से २४३९ ।

७८. ईडजनोर्ध्वे च २४४० ।
७९. लिङः सलोपोऽनन्त्यस्य २२११ ।
८०. अतो येयः २२१२ ।　　॥ ४ ॥
८१. आतो ङितः २२३५ ।
८२. आने मुक् ३१०१ ।
८३. ईदासः ३१०४ ।
८४. अष्टन आ विभक्तौ ३७१ ।
८५. रायो हलि २८६ ।
८६. युष्मदस्मदोरनादेशे ३९३ ।
८७. द्वितीयायां च ३९० ।
८८. प्रथमायाश्च द्विवचने भाषायम् ३८७
८९. योऽचि ३९२ ।
९०. शेषे लोपः ३८५ ।
९१. मपर्यन्तस्य ३८३ ।
९२. युवावौ द्विवचने ३८६ ।
९३. यूयवयौ जसि ३८८ ।
९४. त्वाहौ सौ ३८४ ।
९५. तुभ्यमह्यौ ङयि ३९४ ।
९६. तवममौ ङसि ३९८ ।
९७. त्वमावेकवचने ३८९ ।
९८. प्रत्ययोत्तरपदयोश्च १३७३ ।
९९. त्रिचतुरोः स्त्रियां तिसृचतसृ २९८ ।
१००. अचि र ऋतः २९९　　॥ ५ ॥
१०१. जराया जरसन्यतरस्याम् २२७ ।
१०२. त्यदादीनामः २६५ ।
* द्विपर्यन्तानामेवेष्टिः ।
१०३. किमः कः ३४२ ।
१०४. कु तिहोः १९५४ ।

१०५. क्राति १९६० ।

१०६. तदोः सः सावनन्त्ययोः ३८१ ।

१०७. अदस औ सुलोपश्च ४३७ ।

* अदस औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च ।

१०८. इदमो मः ३४३ ।

१०९. दश्च ३४५ ।

११०. यः सौ ४४१ ।

१११. इदोऽय्पुंसि ३४४ ।

११२. अनाप्यकः ३४६ ।

११३. हलि लोपः ३४७ ।

११४. मृजेर्वृद्धिः २४७३ ।

११५. अचो ञ्णिति २५४ ।

११६. अत उपधायाः २२८२ ।

११७. तद्धितेष्वचामादेः १०७५ ।

११८. किति च १०७६ ।

सिचि प्रभाविट् सन्यचस्तास्ववृतो
जराया अष्टादश ॥

इति पाणिनीयसूत्रपाठे सप्तमस्याध्यायस्य द्वितीयः पादः ।

## तृतीयः पादः ।

१. देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् १४३९ ।

२. केकयमित्रयुप्रलयानां यादेरियः ११४४

३. न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् १०९८ ।

४. द्वारादीनां च १३८६ ।

२४६. द्वार स्वर स्वग्राम (स्वाध्याय) व्यल्कश स्वस्ति स्वर् स्फ्यकृत् (सफ्यकृत्) स्वादुमृदु श्वम् श्वन् स्व ॥ **इति द्वारादिः ॥**

५. न्यग्रोधस्य च केवलस्य १५४३ ।

६. न कर्मव्यतिहारे ३२१७ ।

७. स्वागतादीनां च १५४९ ।

२४७. स्वागत स्वध्वर स्वङ्ग व्यङ्ग व्यड व्यवहार स्वपिति (स्वपति) ॥ **इति स्वागतादिः ॥**

८. श्वादेरिञि १५६० ।

* इकारादाविति वाच्यम् ।

९. पदान्तस्यान्यतरस्याम् १५६१ ।

१०. उत्तरपदस्य १३९६ ।

११. अवयवादृतोः १३९७ ।

१२. सुसर्वार्धाज्जनपदस्य १३९८ ।

१३. दिशोऽमद्राणाम् १३९९ ।

१४. प्राचां ग्रामनगराणाम् १४०० ।

१५. संख्यायाः संवत्सरसंख्यस्य च १७५२ ।

१६. वर्षस्याभविष्यति १७५४ ।

१७. परिमाणान्तस्यासंज्ञाशाणयोः १६८३ ।

* कुलिजशब्दमपि केचित्पठन्ति ।

१८. जे प्रोष्ठपदानाम् १४०९ ।

१९. हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ११३३

२०. अनुशतिकादीनां च १४३८ ॥ १ ॥

२४८. अनुशतिक अनुहोड अनुसंवरण (अनुसंचरण) अनुसंवत्सर अङ्गारवेणु असिहत्य (अस्यहत्य) अस्यहेति वध्योग पुष्करसद् अनुहरत् कुरुकत कुरुपञ्चाल उदकशुद्ध इहलोक परलोक सर्वलोक सर्वपुरुष सर्वभूमि

१ भिन्नपदत्वे मृदुग्रहणवैयर्थ्यम् । तत्र यकारवकाराभावात् ।

प्रयोग परत्नी । 'राजपुरुषात्ष्यञि' । सूत्रनड । इत्यनुशातिकादिः ॥ आकृतिगणोऽयम् ॥ तेन । अभिगम अधिभूत अधिदेव चतुर्विद्या इत्यादयोऽप्यन्ये विज्ञेयाः ॥

२१. देवताद्वन्द्वे च १२३९ ।
२२. नेन्द्रस्य परस्य १२४० ।
२३. दीर्घाच्च वरुणस्य १२४१ ।
२४. प्राचां नगरान्ते १४३१ । [१४३२
२५. जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्
२६. अर्धात्परिमाणस्य पूर्वस्य तु वा १६८४
२७. नातः परस्य १६८५ ।
२८. प्रवाहणस्य ढे ११२९ ।
२९. तत्प्रत्ययस्य च ११३० । [१४६०
३०. नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्
३१. यथातथायथापुरयोः पर्यायेण १७८९
३२. हनस्तोऽचिण्णलोः २५७४ ।
३३. आतो युक्चिण्कृतोः २७६१ ।
३४. नोदात्तोपदेशस्य मान्तस्यानाचमेः २७६३

* अनाचमिकमिवमीनामिति वक्तव्यम् ।

३५. जनीवध्योश्च २५१२ । [२५७०
३६. अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ
३७. शाच्छासाह्वाव्यावेपां युक् २५८५ ।

* पातेर्णौ लुग्वक्तव्यः ।

* धूञ्प्रीञोर्नुग्वक्तव्यः ।

३८. वो विधूनने जुक् २५९० । [२५९१
३९. लीलोर्नुग्लुकावन्यतरस्यां स्नेहनिपातने
४०. भियो हेतुभये षुक् २५९५ ॥ २ ॥
४१. स्फायो वः २५९७ ।
४२. शदेरगतौ तः २५९८ ।

४३. रुहः पोऽन्यतरस्याम् २५९९।

४४. प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ४६३

* मामकनरकयोरुपसंख्यानम्।

* त्यक्त्यपोश्च।

४५. न यासयोः ४६४।

* त्यकनश्च निषेधः।

* पावकादीनां छन्दसि।

* आशिषि वुनश्च न।

* उत्तरपदलोपे न।

* क्षिपकादीनां च।

२४९. (वा ४५३०)। क्षिपका ध्रुवका चरका सेवका करका चटका अवका लहका अलका कन्यका ध्रुवका एडका॥ इति क्षिपकादिः। आकृतिगणः॥

* तारका ज्योतिषि।

* वर्णका तान्तवे।

* वर्तका शकुनौ प्राचाम्।

* अष्टका पितृदेवत्ये।

* सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम्।

४६. उदीचामातः स्थाने यकपूर्वायाः ४६५

* धात्वन्तयकोस्तु नित्यम्।

४७. भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ४६६

४८. अभाषितपुंस्काच्च ४६७।

४९. आदाचार्याणाम् ४६८।

५०. ठस्येकः ११७०।

५१. इसुसुक्तान्तात्कः १२२१।

* दोष उपसंख्यानम्।

५२. चजोः कु घिण्यतोः २८६३।

* निष्ठायामनिट इति वक्तव्यम्।

५३. न्यङ्क्वादीनां च २८६४।

२५०. न्यङ्कु मद्गु भृगु दूरेपाक फलेपाक क्षणेपाक दूरेपाका फलेपाका दूरेपाकु फलेपाकु तक्र (तत्र) वक्र

(चक्र) व्यतिषङ्ग (अनुषङ्ग) अवसर्ग (उपसर्ग) श्वपाक मांसपाक (मासपाक) मूलपाक कपोतपाक उलूकपाक। 'संज्ञायां मेघनिदाघावदाघार्घाः' १८०। न्यग्रोध वीरुत्। इति न्यङ्क्वादिः॥

५४. हो हन्तेर्ञ्णिन्नेषु ३५८।
५५. अभ्यासाच्च २४३०।
५६. हेरचङि २५३१।
५७. सन्लिटोर्जेः २३३१।
५८. विभाषा चेः २५२५।
५९. न क्वादेः २८७५।
६०. अजिव्रज्योश्च २८७६ ॥ ३ ॥
६१. भुजन्युब्जौ पाण्युपतापयोः २८७७।
६२. प्रयाजानुयाजौ यज्ञाङ्गे २८७८।
६३. वञ्चेर्गतौ २८७९।
६४. ओक उचः के २८८०।
६५. ण्य आवश्यके २८८१।
६६. यजयाचरुचप्रवचर्चश्च २८८२।
* त्यजेश्च।
६७. वचोऽशब्दसंज्ञायाम् २८८३।
६८. प्रयोज्यनियोज्यौ शक्यार्थे २८८४।
६९. भोज्यं भक्ष्ये २८८५।
७०. घोर्लोपो लेटि वा ३५८४।
७१. ओतः श्यनि २५१०।
७२. क्सस्याचि २३३७। [२३६५
७३. लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये
७४. शमामष्टानां दीर्घः श्यनि २५१९।
७५. ष्ठिवुक्लमुचमां शिति २३२०।
* आङि चम इति वक्तव्यम्।

७६. क्रमः परस्मैपदेषु २३२२ ।
७७. इषुगमियमां छः २४०० ।
७८. पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशद्सदां पिबजिघ्रधमतिष्ठमनयच्छपश्यच्छेधौशीयसीदाः २३६० ।
७९. ज्ञाजनोर्जा २५११ ।
८०. प्वादीनां ह्रस्वः २५५८ ॥ ४ ॥
८१. मीनातेर्निगमे ३५८५ ।
८२. मिदेर्गुणः २३४६ ।
८३. जुसि च २४८१ ।
८४. सार्वधातुकार्धधातुकयोः २१६८ ।
८५. जाग्रोऽविचिण्णल्ङित्सु २४८० ।
८६. पुगन्तलघूपधस्य च २१८९ ।
८७. नाभ्यस्तस्याचि पिति सार्वधातुके २५०३

* बहुलं छन्दसीति वक्तव्यम् ।

८८. भूसुवोस्तिङि २२२४ ।
८९. उतो वृद्धिर्लुकि हलि २४४३ ।
९०. ऊर्णोतेर्विभाषा २४४५ ।
९१. गुणोऽपृक्ते २४४८ ।
९२. तृणह इम् २५४५ ।
९३. ब्रुव ईट् २४५२ ।
९४. यङो वा २६५१ ।
९५. तुरुस्तुशम्यमः सार्वधातुके २४४४ ।
९६. अस्तिसिचोऽपृक्ते २२२५ ।
९७. बहुलं छन्दसि ३५८६ ।
९८. रुदश्च पञ्चभ्यः २४७५ ।
९९. अड्गार्ग्यगालवयोः २४७६ ।
१००. अदः सर्वेषाम् २४२६ ॥ ५ ॥

१०१. अतो दीर्घो यञि २१७० ।
१०२. सुपि च २०२ ।
१०३. बहुवचने झल्येत् २०५ ।
१०४. ओसि च २०७ ।
१०५. आङि चापः २८९ ।
१०६. संबुद्धौ च २८८ ।
१०७. अम्बार्थनद्योर्ह्रस्वः २६७ ।
१०८. ह्रस्वस्य गुणः २४२ ।
१०९. जसि च २४१ ।
११०. ऋतो ङिसर्वनामस्थानयोः २७५ ।
१११. घेर्ङिति २४५ ।
११२. आण्नद्याः २६८ ।
११३. याडापः २९० ।
११४. सर्वनाम्नः स्याड्ढ्रस्वश्च २९१ ।
११५. विभाषा द्वितीयातृतीयाभ्याम् २९३ ।
११६. ङेराम्नद्याम्नीभ्यः २७० ।
११७. इदुद्भ्याम् २९७ ।
११८. औत् २५६ ।
११९. अच्च घेः २४७ ।
१२०. आङो नाऽस्त्रियाम् २४४ ।

देविकादेवतास्फायो भुजमीनातेरतो
दीर्घो विंशतिः ॥

इति पाणिनीयसूत्रपाठे सप्तमस्याध्यायस्य तृतीयः पादः ।

## चतुर्थः पादः ।

१. णौ चङ्युपधाया ह्रस्वः २३१४ ।
२. नाग्लोपिशास्वृदिताम् २५७२ ।

३. भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् २५६५ ।

* काण्यादीनां वेति वक्तव्यम् ।

२५१. (वा ४६०७)। कण रण भण श्रण लुप हेठ हायि वाणि (चाणि) लोटि (लोठि) लोपि ॥ इति कणादिः ॥

४. लोपः पिबतेरीच्चाभ्यासस्य २५८७ ।

५. तिष्ठतेरित् २५८८ ।

६. जिघ्रतेर्वा २५८९ ।

७. उर्ऋत् २५६७ ।

८. नित्यं छन्दसि ३५८७ ।

९. दयतेर्दिगि लिटि २३८८ ।

* दिग्यादेशेन द्वित्वबाधनमिष्यते ।

१०. ऋतश्च संयोगादेर्गुणः २३७९ ।

११. ऋच्छत्यॄताम् २३८३ ।

१२. शॄदॄप्रां ह्रस्वो वा २४९५ ।

१३. केऽणः ८३४ ।

१४. न कपि ८३५ ।

१५. आपोऽन्यतरस्याम् ८९२ ।

१६. ऋदृशोऽङि गुणः २४०६ ।

१७. अस्यतेस्थुक् २५२० ।

१८. श्वयतेरः २४२१ ।

१९. पतः पुम् २३५५ ।

२०. वच उम् २४५४ ॥ १ ॥

२१. शीङः सार्वधातुके गुणः २४४१ ।

२२. अयङ्यि क्ङिति २६४९ ।

२३. उपसर्गाद्ध्रस्व ऊहतेः २७०२ ।

२४. एतेर्लिङि २४५७ ।

२५. अकृत्सार्वधातुकयोर्दीर्घः २२९८ ।

२६. च्वौ च २१२०।
२७. रीङृतः १२३४।
२८. रिङ् शयग्लिङ्क्षु २३६७।
२९. गुणोऽर्तिसंयोगाद्योः २३८०।
३०. यङि च २६३३।
* हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः।
३१. ई घ्राध्मोः २६४८।
३२. अस्य च्वौ २११८।
३३. क्यचि च २६५८।
३४. अशनायोदन्यधनाया बुभुक्षापिपासा-गर्धेषु २६६१।
३५. न च्छन्दस्यपुत्रस्य ३५८८।
* अपुत्रादीनामिति वक्तव्यम्।
३६. दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति ३५८९।
३७. अश्वाघस्यात् ३५९०।
३८. देवसुम्नयोर्यजुषि काठके ३५९१।
३९. कव्यध्वरपृतनस्यर्चि लोपः ३५९२।
४०. द्यतिस्यतिमास्थामित्ति किति ३०७४।
४१. शाच्छोरन्यतरस्याम् ३०७५। [॥२॥
* श्यतेरित्वं व्रते नित्यमिति वक्तव्यम्।
४२. दधातेर्हिः ३०७६।
४३. जहातेश्च क्त्वि ३३३१।
४४. विभाषा छन्दसि ३५९३।
४५. सुधितवसुधितनेमधिताधिष्वाधिषीय च ३५९४।
४६. दो दद्घोः ३०७७।
४७. अच उपसर्गात्तः ३०७८।
४८. अपो भि ४४२।

* मासश्छन्दसीति वक्तव्यम् ।

* स्ववस्स्वतवसोर्मास उषसश्च त इष्यते ।

४९. सः स्यार्धधातुके २३४२ ।

५०. तासस्त्योर्लोपः २१९१ ।

५१. रि च २१९२ ।

५२. ह एति २२५० ।

५३. यीवर्णयोर्दीधीवेव्योः २४८८ ।

५४. सनि मीमाघुरभलभशकपतपदामच इस् २६२३ ।

* राधो हिंसायां सनीस् वाच्यः ।

५५. आप्ज्ञप्यृधामीत् २६१९ ।

५६. दम्भ इच्च २६२१ ।

५७. मुचोऽकर्मकस्य गुणो वा २६२४ ।

५८. अत्र लोपोऽभ्यासस्य २६२० ।

५९. ह्रस्वः २१८० ।

६०. हलादिः शेषः २१७९ ॥ ३ ॥

६१. शर्पूर्वाः खयः २२५९ ।

६२. कुहोश्चुः २२४५ ।

६३. न कवतेर्यङि २६४१ ।

६४. कृषेश्छन्दसि ३५९५ ।

६५. दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्ससनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च [३५९६

६६. उरत् २२४४ ।

६७. द्युतिस्वाप्योः संप्रसारणम् २३४४ ।

६८. व्यथो लिटि २३५३ ।

६९. दीर्घ इणः किति २४५६ ।

७०. अत आदेः २२४८ ।
७१. तस्मान्नुड् द्विहलः २२८८ ।
७२. अश्नोतेश्च २५३३ ।
७३. भवतेरः २१८१ ।
७४. ससूवेति निगमे ३५९७ ।
७५. निजां त्रयाणां गुणः श्लौ २५०२ ।
७६. भृञामित् २४९६ ।
७७. अर्तिपिपर्त्योश्च २४९३ ।
७८. बहुलं छन्दसि ३५९८ ।
७९. सन्यतः २३१७ ।
८०. ओः पुयण्ज्यपरे २५७७ ॥ ४ ॥
८१. स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा २५७८ ।
८२. गुणो यङ्लुकोः २६३० ।
८३. दीर्घोऽकितः २६३२ ।
८४. नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् २६४२ ।
८५. नुगतोऽनुनासिकान्तस्य २६४३ ।
८६. जपजभदहदशभञ्जपशां च २६३८ ।
८७. चरफलोश्च २६३६ ।
८८. उत्परस्यातः २६३७ ।
८९. ति च ३०३७ ।
९०. रीगृदुपधस्य च २६४४ ।
* रीगृत्वत इति वक्तव्यम् ।
९१. रुग्रिकौ च लुकि २६५२ ।
९२. ऋतश्च २६५३ ।
९३. सन्वल्लघुनि चङ्परेऽनग्लोपे २३१६ ।
९४. दीर्घो लघोः २३१८ ।

९५. अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् २५६६।
९६. विभाषा वेष्टिचेष्ट्योः २५८३।
९७. ई च गणः २५७३।
णौ च शीङः शाच्छोः शर्पूर्वाः स्रवतिसप्तदश।

इति पाणिनीयसूत्रपाठे सप्तमस्याध्याध्यास्य चतुर्थः पादः अध्यायश्च।

---

## ॥ अथ अष्टमोऽध्यायः ॥

### प्रथमः पादः।

१. सर्वस्य द्वे २१३९।
२. तस्य परमाम्रेडितम् ८३।
३. अनुदात्तं च ३६७०।
४. नित्यवीप्सयोः २१४०।

५. परेर्वर्जने २१४१ ।

* परेर्वर्जने वा वचनम् ।

६. प्रसमुपोदः पादपूरणे ३५९९ ।

७. उपर्यध्यधसः सामीप्ये २१४२ ।

८. वाक्यादेरामन्त्रितस्यासूयाऽसंमतिकोप-कुत्सनभर्त्सनेषु २१४३ ।

९. एकं बहुव्रीहिवत् २१४४ ।

१०. आबाधे च २१४५ ।

११. कर्मधारयवदुत्तरेषु २१४६ ।

१२. प्रकारे गुणवचनस्य २१४७ ।

* आनुपूर्व्ये द्वे वाच्ये ।

* क्रियासमभिहारे च ।

* डाचि विवक्षिते द्वे बहुलम् ।

* स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः ।

१३. अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् [२१४८

१४. यथास्वे यथायथम् २१४९

१५. द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञ-पात्रप्रयोगाभिव्यक्तिषु २१५० ।

१६. पदस्य ४०१ ।

१७. पदात् ४०२ ।

१८. अनुदात्तं सर्वमपादादौ ४०३ ।

* समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः ।

१९. आमन्त्रितस्य च ३६५४ ।

२०. युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयो-र्वांनावौ ४०४ ॥ १ ॥

२१. बहुवचनस्य वस्नसौ ४०५ ।

२२. तेमयावेकवचनस्य ४०६ ।

२३. त्वामौ द्वितीयायाः ४०७ ।

२४. न चवाहाहैवयुक्ते ४०८ ।

२५. पश्यार्थैश्चानालोचने ४०९ ।

२६. सपूर्वायाः प्रथमाया विभाषा ४१० ।

२७. तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ३९३४ ।

२५२. गोत्र ब्रुव प्रवचन प्रहसन प्रकथन प्रत्ययन प्रपञ्च प्राय न्याय प्रचक्षण विचक्षण अवचक्षण स्वाध्याय भूयिष्ठ (भूयिष्ट) वानाम ॥ इति गोत्रादिः ॥

२८. तिङ्ङतिङः ३९३५ ।

२९. न लुट् ३९३६ ।

३०. निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ३९३७ ।

३१. नह प्रत्यारम्भे ३९३८ ।

३२. सत्यं प्रश्ने ३९३९ ।

३३. अङ्गाप्रातिलोम्ये ३९४० ।

३४. हि च ३९४१ ।

३५. छन्दस्यनेकमपि साकाङ्क्षम् ३९४२ ।

३६. यावद्यथाभ्याम् ३९४३ ।

३७. पूजायां नानन्तरम् ३९४४ ।

३८. उपसर्गव्यपेतं च ३९४५ ।

३९. तुपश्यपश्यताहैः पूजायाम् ३९४६ ।

४०. अहो च ३९४७　　॥ २ ॥

४१. शेषे विभाषा ३९४८ ।

४२. पुरा च परीप्सायाम् ३९४९ ।

४३. नन्वित्यनुज्ञैषणायाम् ३९५० ।

४४. किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् [३९५१

४५. लोपे विभाषा ३९५२ ।

४६. एहिमन्ये प्रहासे लृट् ३९५३ ।

४७. जात्वपूर्वम् ३९५४ ।
४८. किंवृत्तं च चिदुत्तरम् ३९५५ ।
४९. आहो उताहो चानन्तरम् ३९५६ ।
५०. शेषे विभाषा ३९५७ । ३९५८
५१. गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत्
५२. लोट् च ३९५९ ।
५३. विभाषितं सोपसर्गमनुत्तमम् ३९६० ।
५४. हन्त च ३९६१ । [३९६२
५५. आम एकान्तरमामन्त्रितमनन्तिके
५६. यद्धितुपरं छन्दसि ३९६३ ।
५७. चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः
५८. चादिषु च ३९६५ । [३९६४
५९. चवायोगे प्रथमा ३९६६ ।
६०. हेति क्षियायाम् ३९६७ ॥ ३ ॥
६१. अहेति विनियोगे च ३९६८ ।
६२. चाहलोप एवेत्यवधारणम् ३९६९ ।
६३. चादिलोपे विभाषा ३९७० ।
६४. वैवावेति च च्छन्दसि ३९७१ ।
६५. एकान्याभ्यां समर्थाभ्याम् ३९७२ ।
६६. यद्वृत्तान्नित्यम् ३९७३ ।
* अत्र व्यवहिते कार्यमिष्यते ।
६७. पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः ३९७४ ।

२५३. काष्ठ दारुण अमातापुत्र वेश अनाज्ञात अनुज्ञात अपुत्र अयुत अद्भुत (अनुक्त) मृश घोर सुख परम सु अति ॥ इति काष्ठादिः ॥

६८. सगतिरपि तिङ् ३९७५ ।
* गतिग्रहणे उपसर्गग्रहणमिष्यते ।

६९. कुत्सने च सुप्यगोत्रादौ ३९७६ ।

* क्रियाकुत्सन इति वाच्यम् ।

* पूतिश्चानुबन्ध इति वाच्यम् ।

* वा बह्वर्थमनुदात्तमिति वाच्यम् ।

७०. गतिर्गतौ ३९७७ ।

७१. तिङि चोदात्तवति ३९७८ ।

७२. आमन्त्रितं पूर्वमविद्यमानवत् ४१२ ।

७३. नामन्त्रिते समानाधिकरणे सामान्यवचनम् ४१३ ।

७४. विभाषितं विशेषवचने ३६५५ ।

* बहुवचनमित्यपि भाष्यम् ।

सर्वस्य बहुवचनस्य शेषेऽहेति चतुर्दश ॥

इति पाणिनीयसूत्रपाठे अष्टमस्याध्यायस्य प्रथमः पादः ।

## द्वितीयः पादः ।

१. पूर्वत्रासिद्धम् १२ ।

* पूर्वत्रासिद्धीयमद्विर्वचने ।

२. नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ३५३

३. न मु ने ४३९ ।

४. उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य [३६५७

५. एकादेश उदात्तेनोदात्तः ३६५८ ।

६. स्वरितो वाऽनुदात्ते पदादौ ३६५९ ।

७. नलोपः प्रातिपदिकान्तस्य २३६ ।

* अह्नो नलोपप्रतिषेधः ।

८. न ङिसंबुद्ध्योः ३५२ ।

* ङावुत्तरपदे प्रतिषेधः ।

९. मादुपधायाश्च मतोर्वोऽयवादिभ्यः १८९७ ।

२५४. यव दल्मि ऊर्मि (उर्मि) भूमि कृमि कुञ्चा वशा द्राक्षा ध्राक्षा ध्रजि (ध्वजि) ध्वजि निजि सिजि सजि हरित् ककुत् मरुत् गरुत् इक्षु द्रु मधु ॥ इति यवादिः ॥ आकृतिगणः ॥

१०. झयः १८९८ ।

११. संज्ञायाम् १८९९ ।

१२. आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती १९०० ।

१३. उदन्वानुदधौ च १९०१ ।

१४. राजन्वान्सौराज्ये १९०२ ।

१५. छन्दसीरः ३६०० ।

१६. अनो नुट् ३६०१ ।

१७. नाद्धस्य ३६०२ ।

* भूरिदाव्नस्तुड्वाच्यः ।

* ईद्रथिनः ।

१८. कृपो रो लः २३५० ।

* वालमूललघ्वसुरालमङ्गुलीनां वा लो रमापद्यत इति वाच्यम् ।

* कपिलकादीनां संज्ञाच्छन्दसोर्वेति वाच्यम् ।

२५५ (वा ) । कपिलक निर्विलीक लोमानि पांसुल कल्म शुक्ल कपिलिका तर्पिलिका तर्पिलि ॥ आकृतिगणोऽयम् । इति कपिलकादिः ॥

१९. उपसर्गस्यायतौ २३२६ ।

२०. ग्रो यङि २६३९ ॥ १ ॥

२१. अचि विभाषा २५४१ ।

२२. परेश्च घाङ्कयोः ३२६२ ।

* घ इति स्वरूपस्य ग्रहणम् ।

* योगे चेति वाच्यम् ।

---

१. अत्र कक्षीवच्छब्दस्य पाठो नार्ष इति 'न संप्रसारण' इति सूत्रभाष्यस्वरस इति शब्देन्दुशेखरे स्थितम् ।

२३. संयोगान्तस्य लोपः ५४।

* यणः प्रतिषेधो वाच्यः।

२४. रात्सस्य २८०।

२५. धि च २२४९।

* सङीति वक्तव्यम्।

२६. झलो झलि २२८१।

२७. ह्रस्वादङ्गात् २३६९।

२८. इट ईटि २२६६।

२९. स्कोः संयोगाद्योरन्ते च ३८०।

३०. चोः कुः ३७८।

३१. हो ढः ३२४।

३२. दादेर्धातोर्घः ३२५।

३३. वा द्रुहमुहष्णुहष्णिहाम् ३२७।

३४. नहो धः ४४०।

३५. आहस्थः २४५१। [२९४

३६. व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः

३७. एकाचो बशो भष्झषन्तस्य स्ध्वोः३२६

३८. दधस्तथोश्च २५०१।

३९. झलां जशोऽन्ते ८४।

४०. झषस्तथोर्धोऽधः २२८० ॥ २ ॥

४१. षढोः कः सि २९५। [३०१६

४२. रदाभ्यां निष्ठातो नः पूर्वस्य च दः

४३. संयोगादेरातो धातोर्यण्वतः ३०१७।

४४. ल्वादिभ्यः ३०१८।

* ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः।

* दुग्वोर्दीर्घश्च।

* पूञो विनाशे।

* सिनोतेर्ग्रासकर्मकर्तृकस्य।

४५. ओदितश्च ३०१९ ।
४६. क्षियो दीर्घात् ३०१५ ।
४७. श्योऽस्पर्शे ३०२१ ।
४८. अञ्चोऽनपादाने ३०२४ ।
४९. दिवोऽविजिगीषायाम् ३०२८ ।
५०. निर्वाणोऽवाते ३०२९ ।
५१. शुषः कः ३०३० ।
५२. पचो वः ३०३१ ।
५३. क्षायो मः ३०३२ ।
५४. प्रस्त्योऽन्यतरस्याम् ३०३४ ।
५५. अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ३०३५
* उत्फुल्लसंफुल्लयोरुपसंख्यानम्।
५६. नुदविदोन्दीत्राघ्राह्रीभ्योऽन्यतरस्याम् ३०३८ ।
५७. न ध्याख्यापॄमूर्च्छिमदाम् ३०४० ।
५८. वित्तो भोगप्रत्यययोः ३०४१ ।
५९. भित्तं शकलम् ३०४२ ।
६०. ऋणमाधमर्ण्ये ३०४३　　॥ ३ ॥
६१. नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि ३६०३ ।
६२. क्विन्प्रत्ययस्य कुः ३७७ ।
६३. नशेर्वा ४३१ ।
६४. मो नो धातोः ३४१ ।
६५. म्वोश्च २३०९ ।
६६. ससजुषो रुः १६२ ।
६७. अवयाः श्वेतवाः पुरोडाश्च ३४१६ ।
६८. अहन् ४४३ ।
* रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्।

६९. रोऽसुपि १७२।

७०. अम्नरूधरवरित्युभयथा छन्दसि ३६०४

* अहरादीनां पत्यादिषु वा रेफः।

२५६. (वा ३६०४)। अहर् गीर् धूर्॥ इत्यहरादिः॥ २५७. पति गण पुत्र॥ इति पत्यादिः॥

७१. भुवश्च महाव्याहृतेः ३६०५।

७२. वसुस्रंसुध्वंस्वनडुहां दः ३३४।

७३. तिप्यनस्तेः २४८४।

७४. सिपि धातो रुर्वा २४८५।

७५. दश्च २४६८।

७६. र्वोरुपधाया दीर्घ इकः ४३३।

७७. हलि च ३५४।

७८. उपधायां च २२६५।

७९. न भकुर्छुराम् १६२९।

८०. अदसोऽसेर्दादु दो मः ४१९॥ ४॥

८१. एत ईद्बहुवचने ४३८।

८२. वाक्यस्य टेः प्लुत उदात्तः ९३।

८३. प्रत्यभिवादेऽशूद्रे ९४।

* स्त्रियां न।

* भोराजन्यविशां वेति वाच्यम्।

८४. दूराद्धूते च ९५।

८५. हैहेप्रयोगे हैहयोः ९६। [९७

८६. गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्

८७. ओमभ्यादाने ३६०६।

८८. ये यज्ञकर्मणि ३६०७।

८९. प्रणवष्टेः ३६०८।

९०. याज्यान्तः ३६०९।

९१. ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ३६१०

९२. अग्नीत्प्रेषणे परस्य च ३६११।
९३. विभाषा पृष्टप्रतिवचने हेः ३६१२।
९४. निगृह्यानुयोगे च ३६१३।
९५. आम्रेडितं भर्त्सने ३६१४।
* भर्त्सने पर्यायेणेति वक्तव्यम्।
९६. अङ्गयुक्तं तिङाकाङ्क्षम् ३६१५।
९७. विचार्यमाणानाम् ३६१६।
९८. पूर्वं तु भाषायाम् ३६१७।
९९. प्रतिश्रवणे च ३६१८।
१००. अनुदात्तं प्रश्नान्ताभिपूजितयोः ३६१९
१०१. चिदिति चोपमार्थे प्रयुज्यमाने ३६२०
१०२. उपरिस्विदासीदिति च ३६२१।
१०३. स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ३६२२।
१०४. क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् ३६२३।
१०५. अनन्त्यस्यापि प्रश्नाख्यानयोः ३६२४
१०६. प्लुतावैच इदुतौ ३६२५।
१०७. एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ ३६२६।
* प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादनयाज्यान्तेष्वेव।
* पदान्तग्रहणं कर्तव्यम्।
* आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः।
१०८. तयोर्य्वावचि संहितायाम् ३६२७।

पूर्वत्राचि षढोर्नसत्तैत ईश्चिदित्यष्टौ॥

इति पाणिनीयसूत्रपाठे अष्टमस्याध्यायस्य द्वितीयः पादः।

## तृतीयः पादः।

१. मतुवसो रु संबुद्धौ छन्दसि ३६२८

* वन उपसंख्यानम्। [यां च।

* विभाषा भवद्भगवदघवतामोच्चावस्य छन्दसि भाषा-

२. अत्रानुनासिकः पूर्वस्य तु वा १३६।

३. आतोऽटि नित्यम् ३६३२।

४. अनुनासिकात्परोऽनुस्वारः १३७।

५. समः सुटि १३५।

* संपुंकानां सो वक्तव्यः।

६. पुमः खय्यम्परे १३९।

७. नश्छव्यप्रशान् १४०।

८. उभयथर्क्षु ३६३०।

९. दीर्घादटि समानपादे ३६३१।

१०. नॄन्पे १४१।

११. स्वतवान्पायौ ३६३३।

१२. कानाम्रेडिते १४३।

१३. ढो ढे लोपः २३३५।

१४. रो रि १७३।

१५. खरवसानयोर्विसर्जनीयः ७६।

* (विसर्जनीयोऽनुत्तरपदे)।

१६. रोः सुपि ३३९।

१७. भोभगोअघोअपूर्वस्य योऽशि १६७।

१८. व्योर्लघुप्रयत्नतरः शाकटायनस्य १६८।

१९. लोपः शाकल्यस्य ६७।

२०. ओतो गार्ग्यस्य १६९ ॥ १ ॥

२१. उञि च पदे १७०।

२२. हलि सर्वेषाम् १७१।

२३. मोऽनुस्वारः १२२।

२४. नश्चापदान्तस्य झलि १२३ ।

२५. मो राजि समः क्वौ १२६ ।

२६. हे मपरे वा १२७ ।

* यवलपरे यवला वेति वक्तव्यम् ।

२७. नपरे नः १२९ ।

२८. ङ्णोः कुक्टुक्शरि १३० ।

२९. डः सि धुट् १३१ ।

३०. नश्च १३२ ।

३१. शि तुक् १३३ ।

३२. ङमो ह्रस्वादचि ङमुण्नित्यम् १३४ ।

३३. मय उञो वो वा १०८ ।

३४. विसर्जनीयस्य सः १३८ ।

३५. शर्परे विसर्जनीयः १५० ।

३६. वा शरि १५१ ।

* खर्परे शरि वा विसर्गलोपो वक्तव्यः ।

३७. कुप्वोः ≍क≍पौ च १४२ ।

३८. सोऽपदादौ १५२ ।

* पाशकल्पककाम्येष्विति वाच्यम् ।

* अनव्ययस्येति वाच्यम् ।

* काम्ये रोरेवेति वाच्यम् ।

३९. इणः षः १५३ ।

४०. नमस्पुरसोर्गत्योः १५४ ॥ २ ॥

४१. इदुदुपधस्य चाप्रत्ययस्य १५५ ।

* मुहुसः प्रतिषेधः ।

४२. तिरसोऽन्यतरस्याम् १५६ ।

४३. द्विस्त्रिश्चतुरिति कृत्वोऽर्थे १५७ ।

४४. इसुसोः सामर्थ्ये १५८ ।

४५. नित्यं समासेऽनुत्तरपदस्थस्य १५९ ।

४६. अतःकृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य १६० ।

४७. अधःशिरसी पदे १६१ ।

४८. कस्कादिषु च १४४ ।

२५८. कस्कः कौतस्कुतः भ्रातुष्पुत्रः शुनस्कर्णः सद्यस्कालः सद्यस्क्रीः साद्यस्क्रः कांस्कान् सर्पिष्कुण्डिका धनुष्कपालम् बर्हिष्पलम् (बर्हिष्पलम्) यजुष्पात्रम् अयस्कान्तः तमस्काण्डः अयस्काण्डः मेदस्पिण्डः भास्करः अहस्करः॥ इति कस्कादिः ॥आकृतिगणः॥

४९. छन्दसि वाप्राम्रेडितयोः ३६३४ ।

५०. कःकरत्करतिकृधिकृतेष्वनदितेः ३६३५

५१. पञ्चम्याः परावध्यर्थे ३६३६ ।

५२. पातौ च बहुलम् ३६३७। [३६३८

५३. षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु

५४. इडाया वा ३६३९ ।

५५. अपदान्तस्य मूर्धन्यः २१० ।

५६. सहेः साडः सः ३३५ ।

५७. इण्कोः २११ ।

५८. नुम्विसर्जनीयशर्व्यवायेऽपि ४३४ ।

५९. आदेशप्रत्यययोः २१२ ।

६०. शासिवसिघसीनां च २४१० ॥३॥

६१. स्तौतिण्योरेव षण्यभ्यासात् २६२७।

६२. सः स्विदिस्वदिसहीनां च २६२८ ।

६३. प्राक्सितादड्व्यवायेऽपि २२७६ ।

६४. स्थादिष्वभ्यासेन चाभ्यासस्य २२७७।

६५. उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् [२२७०

६६. सदिरप्रतेः २२७१ ।

६७. स्तन्भेः २२७२ ।

६८. अवाच्चालम्बनाविदूर्ययोः २२७३।
६९. वेश्च स्वनो भोजने २२७४।
७०. परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् २२७५।
७१. सिवादीनां वाऽड्व्यवायेऽपि २३५९।
७२. अनुपर्यभिनिविभ्यः स्यन्दतेरप्राणिषु २३४९।
७३. वेः स्कन्देरनिष्ठायाम् २३९८।
७४. परेश्च २३९९।
७५. परिस्कन्दः प्राच्यभरतेषु ३०२६।
७६. स्फुरतिस्फुलत्योर्निर्निविभ्यः २५३७।
७७. वेः स्कभ्नातेर्नित्यम् २५५६।
७८. इणः षीध्वंलुङ्लिटां धोऽङ्गात् २२४७
७९. विभाषेटः २३२५।
८०. समासेऽङ्गुलेः सङ्गः १०१९ ॥४॥
८१. भीरोः स्थानम् १०२०।
८२. अग्नेः स्तुत्स्तोमसोमाः ९२४।
८३. ज्योतिरायुषः स्तोमः १०२१।
८४. मातृपितृभ्यां स्वसा ९८४।
८५. मातुःपितुर्भ्यामन्यतरस्याम् ९८३।
८६. अभिनिसः स्तनः शब्दसंज्ञायाम् ३१९३
८७. उपसर्गप्रादुर्भ्यामस्तिर्यच्परः २४७२।
८८. सुविनिर्दुर्भ्यः सुपिसूतिसमाः २४७७
८९. निनदीभ्यां स्नातेः कौशले ३०८२।
९०. सूत्रं प्रतिष्णातम् ३०८३।
९१. कपिष्ठलो गोत्रे ३०८४।
९२. प्रष्ठोऽग्रगामिनि २९१७।
९३. वृक्षासनयोर्विष्टरः ३२३३।

९४. छन्दोनाम्नि च ३२०६ ।

९५. गवियुधिभ्यां स्थिरः ९६७ ।

९६. विकुशमिपरिभ्यः स्थलम् ३०८५ ।

९७. अम्बाम्बगोभूमिसव्येऽपद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः २९१८ ।

* स्थास्थिन्स्थॄणामिति वक्तव्यम् ।

९८. सुषामादिषु च १०२२ ।

२५९. सुषामा निःषामा दुःषामा सुषेधः निषेधः (निःषेधः) दुःषेधः सुषन्धिः निःषन्धिः दुःषन्धिः सुष्ठु दुष्ठु 'गौरिषक्थः संज्ञायाम्' १८१ । प्रतिष्णिका जलाषाहम् (जलाषाढम् ) नौषेचनम् दुन्दुभिषेवणम् (दुन्दुभिषेचनम् ) 'एति संज्ञायामगात्' १८२ । 'नक्षत्राद्वा' १८३ । हरिषेणः रोहिणीषेणः ॥ इति सुषामादिः ॥ आकृतिगणः ॥

९९. एति संज्ञायामगात् १०२३ (ग २५३)

१००. नक्षत्राद्वा १०२४ (ग २५३) ॥५॥

१०१. ह्रस्वात्तादौ तद्धिते १३२५ ।

१०२. निसस्तपतावनासेवने २४०३ ।

१०३. युष्मत्तत्ततक्षुष्वन्तःपादम् ३६४० ।

१०४. यजुष्येकेषाम् ३६४१ ।

१०५. स्तुतस्तोमयोश्छन्दसि ३६४२ ।

१०६. पूर्वपदात् ३६४३ ।

१०७. सुञः ३६४४ ।

१०८. सनोतेरनः ३६४५ ।

१०९. सहेः पृतनर्ताभ्यां च ३६४६ ।

---

१. एति संज्ञायां, नक्षत्राद्वा इत्यनयोर्गणसूत्रत्वमेव न्याय्यम् ।

११०. न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ३१६८ ।

२६०. सवने सवने । सूते सूते । सोमे सोमे । सवनमुखे सवनमुखे । किंसं किंसम् (किंसः किंसः) । अनुसवनं अनुसवनम् । गोसनिं गोसनिम् । अश्वसनिं अश्वसनिम् ॥ पाठान्तरम् ॥ सवने सवने सवनमुखे सवनमुखे । अनुसवनमनुसवनम् । संज्ञायां बृहस्पतिसवः ॥ शकुनिसवनम् । सोमे सोमे । सुते सुते । संवत्सरे संवत्सरे । बिसं बिसम् । किसं किसम् । मुसलं मुसलम् । गोसनिम् अश्वसनिम् ॥ इति सवनादिः ॥

१११. सात्पदाद्योः २१२३ ।

११२. सिचो यङि २६४० ।

११३. सेधतेर्गतौ २२७८ ।

११४. प्रतिस्तब्धनिस्तब्धौ च ३०२७ ।

११५. सोढः २३५८ ।

११६. स्तम्भुसिवुसहां चङि २५८० ।

११७. सुनोतेः स्यसनोः २५२४ ।

११८. सदेः परस्य लिटि २३६१ ।

* स्वञ्जेरुपसंख्यानम् ।

११९. निव्यभिभ्योऽड्व्यवाये वा छन्दसि ३६४७ ।

मतुवसोरुञ्चि चेदुदुपधस्य स्तौतिण्योर्भीरोर्ह्रस्वात्तादावेकोनविंशतिः ॥

इति पाणिनीयसूत्रपाठे अष्टमस्याध्यायस्य तृतीयः पादः ।

## चतुर्थः पादः ।

१. रषाभ्यां नो णः समानपदे २३५ ।

* ऋवर्णान्नस्य णत्वं वाच्यम् ।

२. अट्कुप्वाङ्नुम्व्यवायेऽपि १९७।

३. पूर्वपदात्संज्ञायामगः ८५७।

४. वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः १०३९।

५. प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि १०५०।

६. विभाषौषधिवनस्पतिभ्यः १०५१।

* द्व्यच्त्र्यच्भ्यामेव।

* इरिकादिभ्यः प्रतिषेधो वक्तव्यः।

२६१. (वा ४९७६)। इरिका मिरिका तिमिरा। इतीरिकादिः॥ आकृतिगणः॥

७. अह्नोऽदन्तात् ७९१।

८. वाहनमाहितात् १०५२।

९. पानं देशे १०५३।

१०. वा भावकरणयोः १०५४।

* गिरिनद्यादीनां वा।

२६२. (वा ४९८०)। गिरिनदी गिरिनख गिरिनद्ध गिरिनितम्ब चक्रनदी चक्रनितम्ब तूर्यमान माषोन आर्गयन॥ इति गिरिनद्यादिः॥ आकृतिगणः॥

११. प्रातिपदिकान्तनुम्विभक्तिषु च १०५५

* युवादेर्न।

२६३. (वा ४९९९)। युवन् पक्व अहन्॥ इति युवादिः॥ (आर्ययूना क्षत्रिययूना प्रपक्वानि परिपक्वानि दीर्घाह्नी)॥ आकृतिगणोऽयम्॥

१२. एकाजुत्तरपदे णः ३०७।

१३. कुमति च १०५६।

१४. उपसर्गादसमासेऽपि णोपदेशस्य २२८७

१५. हिनुमीना २५३०।

१६. आनि लोट् २२३१।

१७. नेर्गदनदपतपदघुमास्यतिहन्तियातिवाति-द्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च २२८५। [२२३२

१८. शेषे विभाषाऽकखादावषान्त उपदेशे

१९. अनितेः २४७८।

२०. अन्तः २९८४ ॥ १ ॥

२१. उभौ साभ्यासस्य २६०६।

२२. हन्तेरत्पूर्वस्य ३५९।

२३. वमोर्वा २४२९।

२४. अन्तरदेशे ३२९४।

२५. अयनं च ३२९५।

२६. छन्दस्यृदवग्रहात् ३६४८।

२७. नश्च धातुस्थोरुषुभ्यः ३६४९।

२८. उपसर्गाद्नोत्परः ८५९[1]।

२९. कृत्यचः २८३५।

* निर्विण्णस्योपसंख्यानम्।

३०. णेर्विभाषा २८३६।

३१. हलश्चेजुपधात् २८३७।

३२. इजादेः सनुमः २८३८।

३३. वा निंसनिक्षनिन्दाम् २८३९।

३४. न भाभूपूकमिगमिप्यायीवेपाम् २८४

* पूञ एवेह ग्रहणमिष्यते।

* ण्यन्तभादीनामुपसंख्यानम्।

३५. षात्पदान्तात् ३३१०।

३६. नशेः षान्तस्य २५१८।

३७. पदान्तस्य १९८।

---

१. 'उपसर्गाद्बहुलम्' इति भाष्यम्।

३८. पदव्यवायेऽपि १०५७ ।

* अतद्धित इति वाच्यम् ।

३९. क्षुभ्नादिषु च ७९२ ।

२६४. क्षुभ्ना नृनमन नन्दिन् नन्दन नगर । एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति । हरिनन्दी हरिनन्दनः गिरिनगरम् । नृतिर्यङि प्रयोजयति । नरीनृत्यते । नर्तन गहन नन्दन निवेश निवास अग्नि अनूप । एतान्युत्तर पदानि प्रयोजयन्ति । परिनर्तनम् परिगहनम् परिनन्दनम् शरनिवेशः शरनिवासः शराग्निः दर्भानूपः । 'आचार्योदणत्वं च' १८४ । आचार्यभोगीनः । **आकृतिगणोऽयम्** ॥ **पाठान्तरम्** ॥ क्षुभ्ना तृप्नु नृनमन नरनगर नन्दन । यङ्नृती । गिरिनदी गृहगमन निवेश निवास अग्नि अनूप आचार्यभोगीन चतुर्हायन । 'इरिकादीनि वनोत्तरपदानि संज्ञायाम्' १८५ । इरिका तिमिर समीर कुबेर हरि कर्मार ॥ **इति क्षुभ्नादिः** ॥

इति श्रीपाणिनिमुनिप्रणीतो गणपाठः समाप्तः ॥

* अग्रग्रामाभ्यां नयतेर्णो वाच्यः ।

४०. स्तोः श्चुना श्चुः १११ ॥ २ ॥

* श्चुत्वं धुटि सिद्धं वाच्यम् ।

४१. ष्टुना ष्टुः ११३ ।

४२. न पदान्ताट्टोरनाम् ११४ ।

* अनाम्नवतिनगरीणामिति वक्तव्यम् ।

४३. तोः षि ११५ ।

४४. शात् ११२ ।

४५. यरोऽनुनासिकेऽनुनासिको वा ११६ ।

* प्रत्यये भाषायां नित्यम् ।

४६. अचो रहाभ्यां द्वे ५९ ।

४७. अनचि च ४८ ।

* यणो मयो द्वे वाच्ये ।

४८. नादिन्याक्रोशे पुत्रस्य ५५ ।

* तत्परे च ।

* वा हतजग्धयोः ।

* चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम् ।

४९. शरोऽचि ३४० ।
५०. त्रिप्रभृतिषु शाकटायनस्य ५६ ।
५१. सर्वत्र शाकल्यस्य ५७ ।
५२. दीर्घादाचार्याणाम् ५८ ।
५३. झलां जश्झशि ५२ ।
५४. अभ्यासे चर्च २१८२ ।
५५. खरि च १२१ ।
५६. वाऽवसाने २०६ ।
५७. अणोऽप्रगृह्यस्यानुनासिकः ११० ।
५८. अनुस्वारस्य ययि परसवर्णः १२४ ।
५९. वा पदान्तस्य १२५ ।
६०. तोर्लि ११७ ॥ ३ ॥
६१. उदः स्थास्तम्भ्वोः पूर्वस्य ११८ ।
६२. झयो होऽन्यतरस्याम् ११९ ।
६३. शश्छोऽटि १२० ।

* छत्वममीति वाच्यम् ।

६४. हलो यमां यमि लोपः ६० ।
६५. झरो झरि सवर्णे ७१ ।
६६. उदात्तादनुदात्तस्य स्वरितः ३६६० ।
६७. नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ३६६१ ।
६८. अ अ ११ ।

रषाभ्यामुभौ ष्टुना ष्टुरुदः स्थाष्टौ ॥

इति पाणिनीयसूत्रपाठे अष्टमस्याध्यायस्य चतुर्थः पादः अध्यायश्च ।

॥ श्रीरस्तु ॥

# अथ पाणिनीयो धातुपाठः ।

## भ्वादयः ।

१ भू सत्तायाम् । **उदात्तः परस्मैभाषः** ॥ अथ षट्त्रिंशत्तवर्गीयान्ता आत्मनेपदिनः ॥ २ एध वृद्धौ । ३ स्पर्ध संघर्षे । ४ गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च । ५ बाधृ लोडने । ६ नाथृ ७ नाधृ याच्ञोपतापैश्वर्याशीःषु । ८ दध धारणे । ९ स्कुदि आप्रवणे । १० श्विदि श्वैत्ये । ११ वदि अभिवादनस्तुत्योः । १२ भदि कल्याणे सुखे च । १३ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । १४ स्पदि किञ्चिच्चलने । १५ क्लिदि परिदेवने । १६ मुद हर्षे । १७ दद दाने । १८ ष्वद १९ स्वर्द आस्वादने । २० उर्द माने क्रीडायां च । २१ कुर्द २२ खुर्द २३ गुर्द २४ गुद क्रीडायामेव । २५ षूद क्षरणे । २६ ह्राद अव्यक्ते शब्दे । २७ ह्लादी सुखे च । २८ स्वाद आस्वादने । २९ पर्द कुत्सिते शब्दे । ३० यती प्रयत्ने । ३१ युतृ ३२ जुतृ भासने । ३३ विथृ ३४ वेथृ याचने । ३५ श्रथि शैथिल्ये । ३६ ग्रथि कौटिल्ये । ३७ कत्थ श्लाघायाम् ॥ **एधादय उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ अथाष्टत्रिंशत्तवर्गीयान्ताः परस्मैपादिनः ॥ ३८ अत सातत्यगमने । ३९ चिती संज्ञाने । ४० च्युतिर् आसेचने । ४१ श्च्युतिर् (श्चुतिर्) क्षरणे । ४२ मन्थ विलोडने । ४३ कुथि ४४ पुथि ४५ लुथि ४६ मथि हिंसासंक्लेशनयोः । ४७ षिध गत्याम् । ४८ षिधू शास्त्रे माङ्गल्ये च ।

४९ खाद भक्षणे । ५० खद स्थैर्ये हिंसायां च । ५१ बद स्थैर्ये । ५२ गद व्यक्तायां वाचि । ५३ रद विलेखने । ५४ णद अव्यक्ते शब्दे । ५५ अर्द गतौ याचने च । ५६ नर्द ५७ गर्द शब्दे । ५८ तर्द हिंसायाम् । ५९ कर्द कुत्सिते शब्दे । ६० खर्द दन्दशूके । ६१ अति ६२ अदि बन्धने । ६३ इदि परमैश्वर्ये । ६४ बिदि अवयवे ॥ भिदि इत्येके ॥ ६५ गडि वदनैकदेशे । ६६ णिदि कुत्सायाम् । ६७ टु नदि समृद्धौ । ६८ चदि आह्लादे । दीप्तौ च । ६९ त्रदि चेष्टायाम् । ७० कदि ७१ क्रदि ७२ क्लदि आह्वाने रोदने च । ७३ क्लिदि परिदेवने । ७४ शुन्ध शुद्धौ ॥ **अतादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ अथ कवर्गीयान्ता आत्मनेपदिनो द्विचत्वारिंशत् ॥ ७५ शीकृ[1] सेचने । ७६ लोकृ दर्शने । ७७ श्लोकृ संघाते । ७८ द्रेकृ ७९ ध्रेकृ शब्दोत्साहयोः । ८० रेकृ शङ्कायाम् । ८१ सेकृ ८२ स्रेकृ ८३ स्रकि ८४ श्रकि ८५ श्लकि गतौ । ८६ शकि शङ्कायाम् । ८७ अकि लक्षणे । ८८ वकि कौटिल्ये । ८९ मकि मण्डने । ९० कक लौल्ये । ९१ कुक ९२ वृक आदाने । ९३ चक तृप्तौ प्रतिघाते च । ९४ ककि ९५ वकि ९६ श्वकि ९७ त्रकि ९८ ढौकृ ९९ त्रौकृ १०० ष्वष्क[2] १०१ वस्क १०२ मस्क १०३ टिकृ १०४ टीकृ १०५ तिकृ १०६ तीकृ १०७ रघि १०८ लघि गत्यर्थाः ॥ तृतीयो दन्त्यादिरित्येके ॥ लघि भोजननिवृत्तावपि ॥ १०९ अघि ११० वघि १११ मघि गत्याक्षेपे । गतौ गत्यारम्भे चेत्यपरे । मघि कैतवे च ॥ ११२ राघृ ११३ लाघृ ११४ द्राघृ सामर्थ्ये ॥ ध्राघृ इत्यपि केचित् । द्राघृ आयामे च ॥ ११५ श्लाघृ कत्थने ॥ **शीकादय उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ **अथ कवर्गीयान्ताः परस्मैपदिनः पञ्चाशत्** ॥ ११६ फक्क नीचैर्गतौ । ११७ तक हसने । ११८ तकि कृच्छ्रजीवने । (शुक गतौ ।) ११९ बुक्क भषणे ।

---

१. 'सीकृ' २ 'ष्वक्क' इति च पाठान्तरम् ।

१२० कख हसने । १२१ ओखृ १२२ राखृ १२३ लाखृ १२४ द्राखृ १२५ ध्राखृ शोषणालमर्थयोः । १२६ शाखृ १२७ श्लाखृ व्याप्तौ । १२८ उख १२९ उखि १३० वख १३१ वखि १३२ मख १३३ मखि १३४ णख १३५ णखि १३६ रख १३७ रखि १३८ लख १३९ लखि १४० इख १४१ इखि १४२ ईखि १४३ वल्ग १४४ रगि १४५ लगि १४६ अगि १४७ वगि १४८ मगि १४९ तगि १५० त्वगि १५१ श्रगि १५२ श्लगि १५३ इगि १५४ रिगि १५५ लिगि गत्यर्थाः ॥ रिख (रिखि लिख लिखि) त्रख त्रिखि शिखि इत्यपि केचित्। त्वगि कम्पने च ॥ १५६ युगि १५७ जुगि १५८ बुगि वर्जने । १५९ घघ हसने । (दघि पालने । लघि शोषणे ।) १६० मघि मण्डने । १६१ शिघि आघ्राणे । (अर्घ मूल्ये) ॥ **फक्कादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ **अथ चवर्गीयान्ता आत्मनेपदिनः एकविंशतिः** ॥ १६२ वर्च दीप्तौ । १६३ षच सेचने सेवने च । १६४ लोचृ दर्शने । १६५ शच व्यक्तायां वाचि । १६६ श्वच १६७ श्वचि गतौ । (शचि च ।) १६८ कच बन्धने । १६९ कचि १७० काचि दीप्तिबन्धनयोः । १७१ मच १७२ मुचि कल्कने । कथन इत्यन्ये ॥ १७३ मचि धारणोच्छ्रायपूजनेषु । १७४ पचि व्यक्तीकरणे । १७५ ष्टुच प्रसादे । १७६ ऋज गतिस्थानार्जनोपार्जनेषु । १७७ ऋजि १७८ भृजी भर्जने । १७९ एजृ १८० भ्रेजृ १८१ भ्राजृ दीप्तौ । १८२ ईज गतिकुत्सनयोः ॥ **वर्चादय उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ **अथ चवर्गीयान्ता व्रज्यन्ताः परस्मैपदिनो द्विसप्ततिः** ॥ १८३ शुच शोके । १८४ कुच शब्दे तारे । १८५ कुन्च १८६ क्रुन्च कौटिल्याल्पीभावयोः । १८७ लुन्च अपनयने । १८८ अन्चु गतिपूजनयोः । १८९ वन्चु १९० चन्चु १९१ तन्चु १९२ त्वन्चु १९३ मुन्चु १९४ म्लुन्चु १९५ मुचु १९६ म्लुचु गत्यर्थाः । १९७ ग्रुचु १९८ ग्लुचु १९९ कुजु २०० खुजु स्तेयकरणे । २०१ ग्लुन्चु

२०२ षस्ज गतौ । (षस्जिरात्मनेपद्यपि) । २०३ गुजि अव्यक्ते शब्दे । २०४ अर्च पूजायाम् । २०५ म्लेच्छ अव्यक्ते शब्दे । २०६ लछ, २०७ लाछि लक्षणे । २०८ वाछि इच्छायाम् । २०९ आछि आयामे । २१० ह्रीच्छ लज्जायाम् । २११ हुर्छा कौटिल्ये । २१२ मुर्छा मोहसमुच्छ्राययोः । २१३ स्फुर्छा विस्तृतौ । २१४ युच्छ प्रमादे । २१५ उछि उञ्छे । २१६ उछी विवासे । २१७ ध्रज २१८ ध्रजि २१९ धृज २२० धृजि २२१ ध्वज २२२ ध्वजि गतौ । (ध्रिज च) । २२३ कूज अव्यक्ते शब्दे । २२४ अर्ज २२५ षर्ज अर्जने । २२६ गर्ज शब्दे । २२७ तर्ज भर्त्सने । २२८ कर्ज व्यथने । २२९ खर्ज पूजने च । २३० अज गतिक्षेपणयोः । २३१ तेज पालने । २३२ खज मन्थे । (कज मद इत्येके) । २३३ खजि गतिवैकल्ये । २३४ एजृ कम्पने । २३५ टुओ स्फूर्जा वज्रनिर्घोषे । २३६ क्षि क्षये । २३७ क्षिज अव्यक्ते शब्दे । २३८ लज २३९ लजि भर्त्सने । २४० लाज २४१ लाजि भर्जने च । २४२ जज २४३ जजि युद्धे । २४४ तुज हिंसायाम् । २४५ तुजि पालने । २४६ गज २४७ गजि २४८ गृज २४९ गृजि २५० मुज २५१ मुजि शब्दार्थाः । गज मदने च । २५२ वज २५३ व्रज गतौ । **गुजादय उदात्ता उदात्तेतः (क्षिवर्जं) परस्मैभाषाः** ॥ अथ टवर्गीयान्ताः शाड्न्ता आत्मनेपदिनः षट्त्रिंशत् ॥ २५४ अट्ट अतिक्रमहिंसयोः । २५५ वेष्ट वेष्टने । २५६ चेष्ट चेष्टायाम् । २५७ गोष्ट २५८ लोष्ट संघाते । २५९ घट्ट चलने । २६० स्फुट विकसने । २६१ अठि गतौ । २६२ वाठ एकचर्यायाम् । २६३ मठि २६४ कठि शोके । २६५ मुठि पालने । २६६ हेठ विबाधायाम् । २६७ एठ च । २६८ हिडि गत्यनादरयोः । २६९ हुडि संघाते । २७० कुडि दाहे । २७१ वडि विभाजने । २७२ मडि च । २७३ भाडि परिभाषणे । २७४ पिडि संघाते । २७५ मुडि मार्जने । २७६ तुडि तोडने । २७७ हुडि वरणे । हरण इत्येके । (स्फुडि विकसने) । २७८ चडि कोपे । २७९ शडि

रुजायां सङ्घाते च । २८० तडि ताडने । २८१ पडि गतौ । २८२ कडि मदे । २८३ खडि मन्थे । २८४ हेडृ २८५ होडृ अनादरे । २८६ बाडृ आप्लाव्ये । २८७ द्राडृ २८८ ध्राडृ विशरणे । २८९ शाडृ श्लाघायाम् ॥ **अट्टादय उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ अथ आ टवर्गीयान्तसमाप्तेः परस्मैपदिनः ॥ २९० शौटृ गर्वे । २९१ यौटृ बन्धे । २९२ म्लेटृ २९३ म्रेडृ उन्मादे । २९४ कटे वर्षावरणयोः ॥ चटे इत्येके ॥ २९५ अट २९६ पट गतौ । २९७ रट परिभाषणे । २९८ लट बाल्ये । २९९ शट रुजाविशरणगत्यवसादनेषु । ३०० वट वेष्टने । ३०१ किट ३०२ खिट त्रासे । ३०३ शिट ३०४ षिट अनादरे । ३०५ जट ३०६ झट संघाते । ३०७ भट भृतौ । ३०८ तट उच्छ्राये । ३०९ खट काङ्क्षायाम् । ३१० णट नृत्तौ । ३११ पिट शब्दसंघातयोः । ३१२ हट दीप्तौ । ३१३ षट अवयवे । ३१४ लुट विलोडने । डान्तोऽयमित्येके । ३१५ चिट परप्रेष्ये । ३१६ विट शब्दे । ३१७ बिट आक्रोशे । हिट इत्येके ॥ ३१८ इट ३१९ किट ३२० कटी गतौ । ३२१ मडि भूषायाम् । ३२२ कुडि वैकल्ये । कुटीत्येके । ३२३ मुड ३२४ प्रुड मर्दने । ३२५ चुडि अल्पीभावे ३२६ मुडि खण्डने ॥ पुडि चेत्येके ॥ ३२७ रुटि ३२८ लुटि स्तेये ॥ रुठि लुठि इत्येके । रुडि लुडि इत्यपरे ॥ ३२९ स्फुटिर् विशरणे ॥ स्फुटि इत्यपि केचित् ॥ ३३० पठ व्यक्तायां वाचि । ३३१ वठ स्थौल्ये । ३३२ मठ मदनिवासयोः । ३३३ कठ कृच्छ्रजीवने । ३३४ रट परिभाषणे । रठ इत्येके ॥ ३३५ हठ प्लुतिशठत्वयोः ॥ बलात्कार इत्यन्ये ॥ ३३६ रुठ ३३७ लुठ ३३८ उठ उपघाते ॥ ऊठ इत्येके ॥ ३३९ पिठ हिंसासंक्लेशनयोः । ३४० शठ कैतवे च । ३४१ शुठ गतिप्रतिघाते ॥ शुठि इति स्वामी । ३४२ कुठि च । ३४३ लुठि आलस्ये प्रतिघाते च । ३४४ शुठि शोषणे । ३४५ रुठि ३४६ लुठि गतौ । ३४७ चुड्ड भावकरणे । ३४८ अड्ड अभियोगे । ३४९ कड्ड कार्कश्ये ॥ **चुड्डादयस्त्रयो**

दोपधाः ॥ ३५० क्रीडृ विहारे । ३५१ तुडृ तोडने ॥ तूडृ इत्येके ॥ ३५२ हुडृ ३५३ हूडृ ३५४ होडृ गतौ । ३५५ रौडृ अनादरे । ३५६ रोडृ ३५७ लोडृ उन्मादे । ३५८ अड उद्यमे । ३५९ लड विलासे ॥ लल इत्येके ॥ ३६० कड मदे ॥ कडि इत्येके ॥ ३६१ गडि वदनैकदेशे ॥ **शौटादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ अथ पवर्गीयान्ता आत्मनेपादिनः स्तोभत्यन्ताश्चतुस्त्रिंशत् ॥ ३६२ तिपृ ३६३ तेपृ ३६४ ष्टिपृ ३६५ ष्टेपृ क्षरणार्थाः ॥ आद्योऽनुदात्तः ॥ तेपृ कम्पने च ॥ ३६६ ग्लेपृ दैन्ये । ३६७ टु वेपृ कम्पने । ३६८ केपृ ३६९ गेपृ ३७० ग्लेपृ च । ३७१ मेपृ ३७२ रेपृ ३७३ लेपृ गतौ । ३७४ त्रपूष् लज्जायाम् । ३७५ कपि चलने । ३७६ रबि ३७७ लबि ३७८ अबि शब्दे । ३७९ लबि अवस्रंसने च । ३८० कबृ वर्णे । ३८१ क्लीबृ अधार्ष्ट्ये । ३८२ क्षीबृ मदे । ३८३ शीभृ कत्थने ३८४ चीभृ च । ३८५ रेभृ शब्दे ॥ अभिरभी क्वचित्पठ्येते ॥ लभि च । ३८६ ष्टभि ३८७ स्कभि प्रतिबन्धे । ३८८ जभी ३८९ जृभि गात्रविनामे । ३९० शल्भ कत्थने । ३९१ वल्भ भोजने । ३९२ गल्भ धार्ष्ट्ये । ३९३ श्रन्भु प्रमादे ॥ दन्त्यादिश्च ॥ ३९४ ष्टुभु स्तम्भे ॥ **तिप्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ **तिपिस्त्वनुदात्तः** ॥ अथ पवर्गीयान्ताः परस्मैपदिनः एकचत्वारिंशत् ॥ ३९५ गुपू रक्षणे । ३९६ धूप संतापे । ३९७ जप ३९८ जल्प व्यक्तायां वाचि । जप मानसे च ॥ ३९९ चप सान्त्वने । ४०० षप समवाये । ४०१ रप ४०२ लप व्यक्तायां वाचि । ४०३ चुप मन्दायां गतौ । ४०४ तुप ४०५ तुम्प ४०६ त्रुप ४०७ त्रुम्प ४०८ तुफ ४०९ तुम्फ ४१० त्रुफ ४११ त्रुम्फ हिंसार्थाः । ४१२ पर्प ४१३ रफ ४१४ रफि ४१५ अर्ब ४१६ पर्ब ४१७ लर्ब ४१८ बर्ब ४१९ मर्ब ४२० कर्ब ४२१ खर्ब ४२२ गर्ब ४२३ शर्ब ४२४ षर्ब ४२५ चर्ब गतौ । ४२६ कुबि आच्छादने ।

४२७ लुबि ४२८ तुबि अर्दने । ४२९ चुबि वक्त्रसंयोगे । ४३० षृभु ४३१ षृम्भु हिंसार्थौ । षिभु षिम्भि इत्येके ॥ ४३२ शुभ ४३३ शुम्भ भाषणे । भासन इत्येके ॥ हिंसायामित्यन्ये ॥ **घुषादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ अथ अनुनासिकान्ताः कम्यन्ताः आत्मनेपदिनो दश ॥ ४३४ घिणि ४३५ घुणि ४३६ घृणि ग्रहणे । ४३७ घुण ४३८ घूर्ण भ्रमणे । ४३९ पण व्यवहारे स्तुतौ च । ४४० पन च । ४४१ भाम क्रोधे । ४४२ क्षमूष् सहने । ४४३ कमु कान्तौ ॥ **घिण्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ अथ क्रम्यन्ताः परस्मैपदिनः त्रिंशत् ॥ ४४४ अण ४४५ रण ४४६ वण ४४७ भण ४४८ मण ४४९ कण ४५० क्वण ४५१ व्रण ४५२ भ्रण ४५३ ध्वण शब्दार्थाः ॥ धण इत्यपि केचित् ॥ ४५४ ओणृ अपनयने । ४५५ शोणृ वर्णगत्योः । ४५६ श्रोणृ संघाते । ४५७ श्लोणृ च । ४५८ पैणृ गतिप्रेरणश्लेषणेषु (प्रैणृ इत्यपि) । ४५९ ध्रन शब्दे । बण इत्यपि केचित् ॥ ४६० कन दीप्तिकान्तिगतिषु । ४६१ ष्टन ४६२ वन शब्दे । ४६३ वन ४६४ षण संभक्तौ । ४६५ अम गत्यादिषु । ४६६ द्रम ४६७ हम्म ४६८ मीमृ गतौ । मीमृ शब्दे च ॥ ४६९ चमु ४७० छमु ४७१ जमु ४७२ झमु अदने । जिमु इति केचित् । ४७३ क्रमु पादविक्षेपे । **अणादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ अथ रेवत्यन्ता आत्मनेपदिनश्चत्वारिंशत् ॥ ४७४ अय ४७५ वय ४७६ पय ४७७ मय ४७८ चय ४७९ तय ४८० णय गतौ । ४८१ दय दानगतिरक्षणहिंसादानेषु । ४८२ रय गतौ । लय च ॥ ४८३ ऊयी तन्तुसंताने । ४८४ पूयी विशरणे दुर्गन्धे च । ४८५ क्नूयी शब्दे उन्दने च । ४८६ क्ष्मायी विधूनने । ४८७ स्फायी ४८८ ओ प्यायी वृद्धौ । ४८९ तायृ संतानपालनयोः । ४९० शल चलनसंवरणयोः । ४९१ वल ४९२ वल्ल संवरणे संचरणे च । ४९३ मल ४९४ मल्ल धारणे । ४९५ भल ४९६ भल्ल

परिभाषणहिंसादानेषु । ४९७ कल शब्दसंख्यानयोः । ४९८ कल्ल अव्यक्ते शब्दे । अशब्द इति स्वामी ॥ ४९९ तेवृ ५०० देवृ देवने । ५०१ षेवृ ५०२ गेवृ ५०३ ग्लेवृ ५०४ पेवृ ५०५ मेवृ ५०६ म्लेवृ सेवने ॥ शेवृ खेवृ क्लेवृ इत्यप्येके ॥ ५०७ रेवृ प्लवगतौ ॥ अयादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ अथावस्यन्ताः परस्मैपदिनः एकनवतिः ॥ ५०८ मव्य बन्धने । ५०९ सूर्क्ष्य ५१० ईर्क्ष्य ५११ ईर्ष्य ईर्ष्यार्थाः । ५१२ हय गतौ । ५१३ शुच्य अभिषवे । चुच्य इत्येके ॥ ५१४ हर्य गतिकान्त्योः । ५१५ अल भूषणपर्याप्तिवारणेषु ॥ अयं स्वरितेदित्येके ॥ ५१६ ञि फला विशरणे । ५१७ मील ५१८ श्मील ५१९ स्मील ५२० क्ष्मील निमेषणे । ५२१ पील प्रतिष्टम्भे । ५२२ णील वर्णे । ५२३ शील समाधौ । ५२४ कील बन्धने । ५२५ कूल आवरणे । ५२६ शूल रुजायां संघोषे च । ५२७ तूल निष्कर्षे । ५२८ पूल संघाते । ५२९ मूल प्रतिष्ठायाम् । ५३० फल निष्पत्तौ । ५३१ चुल्ल भावकरणे । ५३२ फुल्ल विकसने । ५३३ चिल्ल शैथिल्ये भावकरणे च । ५३४ तिल गतौ । तिल्ल इत्येके ॥ ५३५ वेल्ल ५३६ चेल्ल ५३७ केल्ल ५३८ खेल्ल ५३९ क्ष्वेल्ल ५४० वेल्ल चलने । ५४१ पेल्ल ५४२ फेल्ल ५४३ शेल्ल गतौ । षेल्ल इत्येके ॥ ५४४ स्खल संचलने । ५४५ खल संचये । ५४६ गल अदने । ५४७ षल गतौ । ५४८ दल विशरणे । ५४९ श्वल ५५० श्वल्ल आशुगमने । ५५१ खोल्ल ५५२ खोर्ऋ गतिप्रतिघाते । ५५३ धोर्ऋ गतिचातुर्ये । ५५४ त्सर छद्मगतौ । ५५५ क्मर हूर्च्छने । ५५६ अभ्र ५५७ वभ्र ५५८ मभ्र ५५९ चर गत्यर्थाः ॥ चरतिर्भक्षणेऽपि ॥ ५६० ष्ठिवु निरसने । ५६१ जि जये । ५६२ जीव प्राणधारणे । ५६३ पीव ५६४ मीव ५६५ तीव ५६६ णीव स्थौल्ये । ५६७ क्षीवु ५६८ क्षेवु निरसने । ५६९ उर्वी ५७० तुर्वी ५७१ थुर्वी ५७२ दुर्वी ५७३ धुर्वी हिंसार्थाः । ५७४ गुर्वी उद्यमने । ५७५ मुर्वी बन्धने । ५७६

मुर्वे ५७७ पूर्व ५७८ मर्व पूरणे । ५७९ चर्व अदने । ५८० भर्व हिंसायाम् । ५८१ कर्व ५८२ खर्व ५८३ गर्व दर्पे । ५८४ अर्व ५८५ शर्व ५८६ षर्व हिंसायाम् । ५८७ इवि व्याप्तौ । ५८८ पिवि ५८९ मिवि ५९० णिवि सेचने । (षिवीत्येके) । सेवन इति तरङ्गिण्याम् ॥ ५९१ हिवि ५९२ दिवि ५९३ धिवि ५९४ जिवि प्रीणनार्थाः । ५९५ रिवि ५९६ रवि ५९७ धवि गत्यर्थाः । ५९८ कृवि हिंसाकरणयोश्च । ५९९ मव बन्धने । ६०० अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु ॥ मव्यादय उदात्ता उदात्तेतः परस्मैभाषाः ॥ जिस्त्वनुदात्तः ॥ ६०१ धावु गतिशुद्ध्योः ॥ उदात्तः स्वरितेदुभयतोभाषः ॥ अथोष्मान्ता आत्मनेपदिनो द्विपञ्चाशत् ॥ ६०२ धुक्ष ६०३ धिक्ष संदीपनक्लेशनजीवनेषु । ६०४ वृक्ष वरणे । ६०५ शिक्ष विद्योपादाने । ६०६ भिक्ष भिक्षायामलाभे लाभे च । ६०७ क्लेश अव्यक्तायां वाचि । बाधन इति दुर्गः ॥ ६०८ दक्ष वृद्धौ शीघ्रार्थे च । ६०९ दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु । ६१० ईक्ष दर्शने । ६११ ईष गतिहिंसादर्शनेषु । ६१२ भाष व्यक्तायां वाचि । ६१३ वर्ष स्नेहने । ६१४ गेषृ अन्विच्छायाम् । ग्लेषृ इत्येके ॥ ६१५ पेषृ प्रयत्ने । (एषृ इत्येके । येषृ इत्यप्यन्ये) । ६१६ जेषृ ६१७ णेषृ ६१८ एषृ ६१९ प्रेषृ गतौ । ६२० रेषृ ६२१ हेषृ ६२२ ह्रेषृ अव्यक्ते शब्दे । ६२३ कासृ शब्दकुत्सायाम् । ६२४ भासृ दीप्तौ । ६२५ णासृ ६२६ रासृ शब्दे । ६२७ णस कौटिल्ये । ६२८ भ्यस भये । ६२९ आङः शसि इच्छायाम् । ६३० ग्रसु ६३१ ग्लसु अदने । ६३२ ईह चेष्टायाम् । ६३३ वहि ६३४ महि वृद्धौ । (बहीत्येके) । ६३५ अहि गतौ । ६३६ गर्ह ६३७ गल्ह कुत्सायाम् । ६३८ बर्ह ६३९ बल्ह प्राधान्ये । ६४० वर्ह ६४१ वल्ह परिभाषणहिंसाच्छादनेषु । ६४२ प्लिह गतौ । ६४३ वेहृ (बेहृ) ६४४ जेहृ ६४५ बाहृ (वाहृ) प्रयत्ने । जेहृ गतावपि ॥

६४६ द्राह्ट निद्राक्षये ॥ निक्षेप इत्येके ॥ ६४७ काश्ट दीप्तौ । ६४८ ऊह वितर्के । ६४९ गाहू विलोडने । ६५० गृहू ग्रहणे । ६५१ ग्लह च । ६५२ घुषि कान्तिकरणे । घष इति केचित् ॥ **घुक्षादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ गृहिस्तु वेट् ।** अथ अर्हत्यन्ताः परस्मैपदिन एकनवतिः ॥ ६५३ घुषिर् अविशब्दने । शब्द इति अन्ये पेठुः ॥ ६५४ अक्षू व्याप्तौ । ६५५ तक्षू ६५६ त्वक्षू तनूकरणे । ६५७ उक्ष सेचने । ६५८ रक्ष पालने । ६५९ णिक्ष चुम्बने । ६६० त्रक्ष ६६१ ष्ट्रक्ष (तृक्ष ष्टृक्ष) ६६२ णक्ष गतौ । ६६३ वक्ष रोषे । संघात इत्येके । ६६४ मृक्ष संघाते । म्रक्ष इत्येके ॥ ६६५ तक्ष त्वचने । पक्ष परिग्रह इत्येके । ६६६ सूर्क्ष आदरे । षूर्क्ष इति केचित् । ६६७ काक्षि ६६८ वाक्षि ६६९ माक्षि काङ्क्षायाम् । ६७० द्राक्षि ६७१ ध्राक्षि ६७२ ध्वाक्षि घोरवासिते च । ६७३ चूष पाने । ६७४ तूष तुष्टौ । ६७५ पूष वृद्धौ । ६७६ मूष स्तेये । ६७७ लूष ६७८ रूष भूषायाम् । ६७९ शूष प्रसवे । ६८० यूष हिंसायाम् । ६८१ जूष च । ६८२ भूष अलंकारे । ६८३ ऊष रुजायाम् । ६८४ ईष उञ्छे । ६८५ कष ६८६ खष ६८७ शिष ६८८ जष ६८९ झष ६९० शष ६९१ वष ६९२ मष ६९३ रुष ६९४ रिष हिंसार्थाः । ६९५ भष भर्त्सने । ६९६ उष दाहे । ६९७ जिषु ६९८ विषु ६९९ मिषु सेचने । ७०० पुष पुष्टौ । ७०१ श्रिषु ७०२ श्लिषु ७०३ प्रुषु ७०४ प्लुषु दाहे । ७०५ पृषु ७०६ वृषु ७०७ मृषु सेचने । मृषु सहने च । इतरौ हिंसासंक्लेशनयोश्च ॥ ७०८ घृषु संघर्षे । ७०९ हृषु अलीके । ७१० तुस ७११ ह्रस ७१२ ह्लस ७१३ रस शब्दे । ७१४ लस श्लेषणक्रीडनयोः । ७१५ घस्लृ अदने । ७१६ जर्ज ७१७ चर्च ७१८ झर्झ परिभाषणहिंसातर्जनेषु । ७१९ पिसृ ७२० पेसृ गतौ । ७२१ हसे हसने । ७२२ णिश समाधौ । ७२३ मिश ७२४ मश शब्दे रोषकृते च । ७२५ शव गतौ । ७२६ शश प्लुतगतौ । ७२७ शसु हिंसायाम् । ७२८ शंसु

स्तुतौ । दुर्गताविति दुर्गः । ७२९ चह परिकल्कने । ७३० मह पूजायाम् । ७३१ रह त्यागे । ७३२ रहि गतौ । ७३३ दृह ७३४ दृहि ७३५ बृह ७३६ बृहि वृद्धौ । बृहि शब्दे च । बृहिर् चेत्येके । ७३७ तुहिर् ७३८ दुहिर् ७३९ उहिर् अर्दने । ७४० अर्ह पूजायाम् ॥ **घुषिरादय उदात्ता उदात्तेतः परस्मैभाषाः ॥ घसिस्त्वनुदात्तः** ॥ अथ कृपूपर्यन्ता आत्मनेपदिनः षड्विंशतिः ॥ ७४१ द्युत दीप्तौ । ७४२ श्विता वर्णे । ७४३ ञिमिदा स्नेहने । ७४४ ञिष्विदा स्नेहनमोचनयोः । मोहनयोरित्येके । ञिक्ष्विदा चेत्येके ॥ ७४५ रुच दीप्तावभिप्रीतौ च । ७४६ घुट परिवर्तने । ७४७ रुट ७४८ लुट ७४९ लुठ प्रतिघाते । ७५० शुभ दीप्तौ । ७५१ क्षुभ संचलने । ७५२ णभ ७५३ तुभ हिंसायाम् । आद्योऽभावेऽपि ॥ ७५४ स्रन्सु ७५५ ध्वन्सु ७५६ भ्रन्सु अवस्रंसने । ध्वन्सु गतौ च । भ्रन्शु इत्यपि केचित् ॥ तृतीय एव तालव्यान्त इत्यन्ये ॥ ७५७ स्रम्भु विश्वासे । ७५८ वृतु वर्तने । ७५९ वृधु वृद्धौ । ७६० शृधु शब्दकुत्सायाम् । ७६१ स्यन्दू प्रस्रवणे । ७६२ कृपू सामर्थ्ये ॥ **द्युतादय उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ **वृत्** ॥ अथ त्वरत्यन्ताः त्रयोदशात्मनेपदिनः षितश्च ॥ ७६३ घट चेष्टायाम् । ७६४ व्यथ भयसंचलनयोः । ७६५ प्रथ प्रख्याने । ७६६ प्रस विस्तारे । ७६७ म्रद मर्दने । ७६८ स्खद स्खदने । ७६९ क्षजि गतिदानयोः । ७७० दक्ष गतिहिंसनयोः । ७७१ क्रप कृपायां गतौ च । ७७२ कदि ७७३ क्रदि ७७४ क्लदि वैक्लव्ये । वैकल्य इत्येके । त्रयोऽप्यनिदित इति नन्दी । इदित इति स्वामी । कदिक्रदी इदितौ, क्लद क्लद इति चानिदितौ इति मैत्रेयः ॥ ७७५ ञि त्वरा संभ्रमे ॥ **घटादयः षितः ॥ उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ अथ फणान्ताः परस्मैपदिनः ॥ ७७६ ज्वर रोगे । ७७७ गड सेचने । ७७८ हेड वेष्टने । ७७९ वट ७८० भट परिभाषणे । ७८१ णट नृत्तौ । नतावित्येके ॥ गतावित्यन्ये ॥ ७८२ ष्टक प्रतिघाते ।

७८३ चक तृप्तौ । ७८४ कखे हसने । ७८५ रगे शङ्कायाम् । ७८६ लगे सङ्गे । ७८७ हगे ७८८ ह्लगे ७८९ षगे ७९० ष्ठगे संवरणे । ७९१ कगे नोच्यते । ७९२ अक ७९३ अग कुटिलायां गतौ । ७९४ कण ७९५ रण गतौ । ७९६ चण ७९७ शण ७९८ श्रण दाने च । शण गतावित्यन्ये ॥ ७९९ श्रथ (श्नथ श्लथ) ८०० क्नथ ८०१ क्रथ ८०२ क्लथ हिंसार्थाः । ८०३ वन च । वनु च नोच्यते । ८०४ ज्वल दीप्तौ । ८०५ ह्वल ८०६ ह्मल चलने । ८०७ स्मृ आध्याने । ८०८ दॄ भये । ८०९ नॄ नये । ८१० श्रा पाके । मारणतोषणनिशामनेषु ८११ ज्ञा । निशानेष्विति पाठान्तरम् ॥ कम्पने ८१२ चलिः । ८१३ छदिर् ऊर्जने । जिह्वोन्मथने ८१४ लडिः । ८१५ मदी हर्षग्लेपनयोः । ८१६ ध्वन शब्दे । दलि-वलि-स्खलि-रणि-ध्वनि-त्रपि-क्षपयश्चेति भोजः । ८१७ स्वन अवतंसने ॥ **घटादयो मितः** ॥ जनी-जॄष्-क्नसु-रञ्जो-ऽमन्ताश्च । ज्वल-ह्वल-ह्मल-नमामनुपसर्गाद्वा । ग्ला-स्ना-वनु-वमां च । न कमि-अमि-चमाम् । ८१८ शमो दर्शने । ८१९ यमोऽपरिवेषणे । ८२० स्खदिर् अवपरिभ्यां च । ८२१ फण गतौ ॥ **घटादयः फणान्ता मितः** । **वृत्** । **ज्वरादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ ८२२ राजृ दीप्तौ । **उदात्तः स्वरितेदुभयतोभाषः** ॥ ८२३ टु भ्राजृ ८२४ टु भ्राशृ ८२५ टु भ्लाशृ दीप्तौ ॥ **उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ अथ क्षरत्यन्ताः परस्मैपदिनः ॥ ८२६ स्यमु ८२७ स्वन ८२८ ध्वन शब्दे । **फणादयो गताः** ॥ ८२९ षम ८३० ष्टम अवैकल्ये ॥ **वृत्** ॥ ८३१ ज्वल दीप्तौ । ८३२ चल कम्पने । ८३३ जल घातने । ८३४ टल ८३५ ट्वल वैक्लव्ये । ८३६ ष्ठल स्थाने । ८३७ हेलं विलेखने । ८३८ णल गन्धे । बन्धन इत्येके ॥ ८३९ पल गतौ । ८४० बल प्राणने धान्यावरोधने च । ८४१ पुल महत्त्वे । ८४२ कुल संस्त्याने बन्धुषु च । ८४३ शल ८४४ हुल ८४५ पत्लृ गतौ । (हुल हिंसायां

